इला मनुसुता चेयं पुमान् भवतु शंकर ॥ ४५
श्रीदक्षिणकुटीद्वीपं निर्मितं च त्वया प्रभो ।
वसिष्ठाश्रम इत्येव नाम्ना ख्यातोऽस्तु भूतले ॥ ४६
स्वयंभूतेश्वरस्त्वं तु वसिष्ठेश्वर इत्यपि ।
विश्रुतस्त्वं भव विभो स्मरणाद्देहि दर्शनम् ॥ ४७

स्कन्दः—

वसिष्ठप्रार्थनां श्रुत्वा प्राह तं परमेश्वरः ।
मम पादाम्बुजद्वन्द्वे निश्चला भक्तिरस्तु ते ॥ ४८
ब्रह्मवित्सु वरिष्ठश्च भविष्यसि न संशयः ।
जीवन्मुक्तिं च संप्राप्य कल्पान्ते ब्रह्मरूपिणः ॥ ४९
सायुज्यं प्राप्स्यसि त्वं तु सत्यमेतन्न संशयः ।
इला मनुसुता चेयं पुमान् वंशप्रधारकः ॥ ५०
भवेदेव न सन्देहो मासि मासि दिनत्रयम् ।
स्त्रीरूपधारको भूत्वा तिष्ठेदेव न संशयः ॥ ५१
वसिष्ठेश्वरनाम्नापि ख्यातस्तिष्ठामि निश्चितम् ।
श्रीदक्षिणकुटीद्वीपं स्वायंभुवमिदं स्थलम् ॥ ५२
वसिष्ठाश्रम इत्येव ख्यातिं गच्छतु विष्टपे ।
एवं तस्मै वरान् प्रदात् स्वयंभूतेश्वरः शिवः ॥ ५३

॥ इति श्रीदक्षिणकुटीद्वीपक्षेत्रमाहात्म्ये वसिष्ठेश्वरविश्रुतिर्नाम पञ्चमोऽध्यायः ॥

## . ॥ अथ षष्ठोऽध्यायः [ मनुस्तुतिः ] ॥

स्कन्दः—

मनुर्नत्वा स्वयंभूतनायकं परमेश्वरम् ।
बद्धाञ्जलिपुटो भूत्वा तुष्टुवे भावपूर्वकम् ॥ १

मनुः—

शिवं निर्विकल्पं चिदानन्दरूपं
परं निर्गुणं योगगम्यं परेशम् ।

सदानन्दरूपं निजानन्दसंस्थं
स्वयंभूतमाद्यं महेशं नमामि ॥ २
सदा बोधरूपं निराकारमेकं
निरानन्दमद्वैतमानन्दपूर्णम् ।
परं निर्गुणं साङ्ख्यवेदान्तलभ्यं
स्वयंभूतमाद्यं महेशं नमामि ॥ ३
गुणातीतमाद्यं चिदाकाशरूपं
हृदाकाशमध्ये स्वयंज्योतिरूपम् ।
परं शुद्धमाद्यं परज्ञानगम्यं
स्वयंभूतमाद्यं महेशं नमामि ॥ ४
सुकैलासलोके परे भोगपुर्यां
महामण्टपे रत्नसिंहासनस्थम् ।
कुमारेण शक्त्या गणेशेन युक्तं
स्वयंभूतमाद्यं महेशं नमामि ॥ ५
शिवं ब्रह्मरूपं रमेशानरूपं
महेशानरूपं पराशक्तिरूपम् ।
महाकालरूपं गणेशानरूपं
स्वयंभूतमाद्यं महेशं नमामि ॥ ६
प्रधानस्वरूपं महत्तत्त्वरूपं
धरावारिरूपं दिगीशादिरूपम् ।
असत्सत्स्वरूपं जगद्धेतुभूतं
स्वयंभूतमाद्यं महेशं नमामि ॥ ७
अजं श्वेतवर्णं सदापञ्चवक्त्रं
त्रिनेत्रैश्च युक्तं तु चन्द्रार्धचूडम् ।
सदा मुण्डमालां गले धारयन्तं
स्वयंभूतमाद्यं महेशं नमामि ॥ ८
महाघोररूपं महाशान्तरूपं
वृषेशानसंस्थं च गङ्गाधरं त्वाम् ।
हरं नीलकण्ठं सुव्याघ्राजिनाढ्यं
स्वयंभूतमाद्यं महेशं नमामि ॥ ९

स्कन्दः—

इदं यः पठेत् प्रातरुत्थाय विद्वान्
त्रिसन्ध्यं सदा भक्तियुक्तो विशुद्धः ।
स पुत्रान् श्रियं सर्वकामान् लभेत
परब्रह्मरूपो भवेदन्तकाले ॥ १०

अनेन स्तोत्रराजेन कृतेन मनुना विभुः ।
स्वयंभूतेश्वरस्तुष्टः प्राह तं सूर्यनन्दनम् ॥ ११
वरान् वृणु सूर्यपुत्र वैवस्वत नृपोत्तम ।
दास्ये सत्यं न सन्देहो दुर्लभान् भुवनत्रये ॥ १२

मनुः—

सर्जने मानवानां च पालने च नियोजितः ।
सप्तर्ष्यगस्त्यवंशेषु सञ्जाता ब्राह्मणोत्तमाः ॥ १३
चातुर्वर्ण्यजनाश्चापि मम वंशसमुद्भवाः ।
भवेयुरिति मां प्राह पिता मे दिननायकः ॥ १४
इष्ट्यां मम समुद्भूता कन्याद्य तु पुमान् कृतः ।
पुंस्त्रीरूपयुतश्चायं बलवीर्यसमन्वितान् ॥ १५
क्षत्त्रधर्मयुतान् पुत्रान् देहि देव नमोऽस्तु ते ।
धर्मे मतिं च मे देहि भक्तिं ते पादपङ्कजे ॥ १६
एवं तत्प्रार्थनां श्रुत्वा तमाह परमेश्वरः ।
इला ते तनया राजन् मया चाद्य पुमान् कृतः ॥ १७
रूपद्वययुतश्चायं वंशकृत् सूर्यचन्द्रयोः ।
सुद्युम्न इति विख्यातिं प्राप्नुयाद्धरणीतले ॥ १८
अन्ये धर्मगुणोपेता वंशवृद्धिकराश्च ते ।
दश पुत्रा भवेयुश्च क्षत्त्रधर्मपरायणाः ॥ १९
देहान्ते मम सायुज्यं दास्ये तुभ्यं न संशयः ।
एवं दत्त्वा वरान् शंभुः स्वयंभूतस्तिरोऽभवत् ॥ २०
वसिष्ठेन मनुः प्रीतः सुद्युम्नेन मुदान्वितः ।
प्रतिष्ठानपुरं प्राप्य पृथिवीमशिषत् सुखम् ॥ २१
मनोर्वैवस्वतस्यासन् वरदानाच्छिवस्य च ।
इक्ष्वाकुश्चैव नाभागो धृष्णुः शर्यातिरेव च ॥ २२

नरिष्यश्च तथा प्रांशुर्नाभागारिष्टसप्तमाः ।
करूषश्च पृषध्रश्च विश्रुता मनुपुत्रकाः ॥ २३
सुद्युम्नस्तु प्रतिष्ठाने स्थित्वा भूमिं शशास च ।
सुद्युम्नस्य तु दायादास्त्रयः परमधार्मिकाः ॥ २४
उत्कलश्च गयश्चैव विनताश्वश्च योगिप ।
उत्कलस्योत्तरा योगिन् विनताश्वस्य पश्चिमा ॥ २५
दिक् पूर्वा तु मुनीशान गयस्य तु गयापुरी ।
इलायां तु बुधाज्जातः पुण्यकीर्तिः पुरूरवाः ॥ २६
प्रतिष्ठानपुरं तस्मै सुद्युम्नस्तु ददौ मुने ।
पुरूरवा नृपश्रेष्ठश्चन्द्रवंशप्रवर्तकः ॥ २७
उत्कलस्य त्रयः पुत्रास्त्रिषु लोकेषु विश्रुताः ।
धृष्टकश्चाम्बरीषश्च दण्डश्चेति सुतास्त्रयः ॥ २८
यश्चकार महात्मासौ दण्डकारण्यमुत्तमम् ।
वनं तल्लोकविख्यातं तापसानामनुत्तमम् ॥ २९
तत्र प्रविष्टमात्रस्तु नरः पापात् प्रमुच्यते ।
विकुक्षिप्रमुखा जाताः शतमिक्ष्वाकुनन्दनाः ॥ ३०
शशादप्रमुखाश्चान्ये दक्षिणाशाप्रपालने ।
नियोजिताश्च पित्रा तु तेषु चैको नृपोत्तमः ॥ ३१
चोल इत्येव विख्यातो दण्डकावनमाविशत् ।
तुङ्गाया दक्षिणे भागे स तु राज्यमकल्पयत् ॥ ३२
कान्तारच्छेदिसंज्ञस्तु तस्य पुत्रो नृपोत्तमः ।
छित्त्वा राष्ट्रे तु कान्तारं काञ्चीपुरमकल्पयत् ॥ ३३
श्रीशैलाच्च समारभ्य दक्षिणे सागरान्तकम् ।
पूर्वस्मिन् सागरान्तं च देशे वै पश्चिमे क्रमात् ॥ ३४
नीलपर्वतपर्यन्तं स्थापयामास राष्ट्रकम् ।
तेन कल्पितराज्यं तु चोलराष्ट्रमिति स्मृतम् ॥ ३५
अस्मिन् राष्ट्रे तु न्यवसन् वनेषु च मुनीश्वराः ।
क्षुद्रग्रामपुरेष्वेव चातुर्वर्ण्यजना अपि ॥ ३६
न्यवसन् सुखसंयुक्ताश्चोलेन परिपालिताः ।
धर्मेण तस्य सन्तुष्टा ब्रह्मविष्णुमहेश्वराः ॥ ३७

पिनाकिनीं नदीं पुण्यां पिनाकी तु ससर्ज च ।
ब्रह्मा क्षीरनदीं पुण्यां गारुडीं केशवोऽसृजत् ॥ ३८
ततः श्वेतनदीं पुण्यां ससर्ज सुरनायकः ।
देवी स्वर्णमुखीं चापि ससृजे भक्तहेतवे ॥ ३९
एवं पञ्चनदीभिश्च शोभितं तस्य राष्ट्रकम् ।
कान्तारच्छेदिचोलस्तु पालयामास हृष्टधीः ॥ ४०
कवेरचोलभूपस्तु तस्य पुत्रः प्रतापवान् ।
प्रदाय तस्मै राज्यं च शिवलोकमवाप सः ॥ ४१
कवेरचोलभूपस्तदाशिषद्राष्ट्रमुत्तमम् ।
वर्षाकाले जलयुता नद्यः पञ्चापि क्षुद्रकाः ॥ ४२
स्वस्य राष्ट्रं सदा चाद्भिः पूरितं कर्तुमेव च ।
महानदीमातृकाढ्यं कर्तुमैच्छन्नृपोत्तमः ॥ ४३
विभज्यैव त्रिधा राज्यं पुत्रेभ्यः प्रददौ क्रमात् ।
राजेन्द्रः प्रथमस्तेषु काञ्चीपुरमवाप च ॥ ४४
राजशेखरभूपालः संप्राप च चिदम्बरम् ।
चिदम्बराद्दक्षिणं तु संप्राप च हरिध्वजः ॥ ४५
स्वाभीष्टलब्धये राजा तपस्तप्तुं तु भार्यया ।
सह्याद्रिशिखरं गत्वा ततापं नियमं श्रितः ॥ ४६

॥ इति श्रीदक्षिणकुटीद्वीपक्षेत्रमाहात्म्ये मनुस्तुतिर्नाम षष्ठोऽध्यायः ॥

## ॥ अथ सप्तमोऽध्यायः [कावेरीसम्भवः] ॥

स्कन्दः—

नवाक्षरीं महाविद्यां संप्राप्य कुम्भसंभवात् ।
ब्रह्माणं हृदये ध्यात्वा कवेरचोलभूपतिः ॥
स्वाभीष्टसिद्धये भक्त्या शतवर्षांस्ततापं च ।

सनत्कुमार उवाच—

नवाक्षरमनुं ब्रूहि पद्मजस्य षडानन ॥
कवेरचोलभूपेन जप्तं लोकहिताय च ।

स्कन्द उवाच—

नवाक्षरस्य मन्त्रस्य स्वयं ब्रह्मा ऋषिः स्मृतः ॥ ३
बृहती छन्द आख्यातं देवता पद्मसंभवः ।
कं बीजं च नमः शक्तिः कीलकं च पितामहः ॥ ४
न्यासाः कमित्यादयश्च प्रणवेन समन्विताः ।
कं नमः पितामहाय प्रणवेन समन्वितः ॥ ५
नवाक्षरो महामन्त्रः पद्मजस्य प्रविश्रुतः ।

ध्यानम्—

तप्तस्वर्णसमानकान्तिरुचिरं पीताम्बरं तुन्दिलं
पद्मासीनमजं चतुर्मुखयुतं वेदादिभिः सेवितम् ।
पद्मं पुस्तकमादधानमनिशं दर्भं च कौमण्डलं
बीजापूरफलं वरं त्वभयकं दण्डं भजे शक्तिभिः ॥ ६
बीजं षट्कोणमध्ये वसुदलकमले भूमिकोणे चतुष्के
वार्णीं मायां च भूमिं वसुदलकमले मूलमन्त्रस्य वर्णान् ।
तत्सन्धिष्वङ्गमन्त्रान् प्रणवपुटितकान् मातृकावृत्तमध्ये
भूगेहे वह्निपूर्वान् सुरमुनिगणपान् पूजयेद्ब्रह्मयन्त्रे ॥ ७
संपूज्य यन्त्रे ब्रह्माणं कवेरचोलभूपतिः ।
हृदि ध्यात्वा मनुं जप्त्वा निराहारस्तताप च ॥ ८
ततो वै शतवर्षान्ते ब्रह्मा लोकपितामहः ।
आविरासीत् पुरस्तस्य हंसवाहनमास्थितः ॥ ९
सरस्वत्या च गायत्र्या सावित्र्या च समन्वितः ।
मरीचिप्रमुखैः पुत्रैर्विख्यातैः सप्तब्रह्मभिः ॥ १०
चतुर्भिश्चापि वेदैश्च दिव्यमूर्तिसमन्वितैः ।
देवबृन्दैर्मुनीशानैः समन्तात् परिसेवितम् ॥ ११
कवेरचोलभूपालो ववन्दे भावपूर्वकम् ।
हस्ताञ्जलिपुटो भूत्वा तुष्टुवे पद्मसंभवम ॥ १२

कवेरः—

सत्यादूर्ध्वमहामहिम्नि परमे व्योमात्मके मण्डले
वैराजाभिधब्रह्मरूपकवरे श्रीब्रह्मलोकाभिधे ।

रत्नस्तम्भसहस्रनिर्मितमहासन्मण्टपे मध्यगे
नानाशक्तिशिरोद्धृते कमलके ब्रह्माणमीशं भजे ॥ १३
कार्यब्रह्ममयं हिरण्मयतनुं रत्नादिभिर्भूषितं
वेदान्तागमसंस्तुतं मुनिनुतं वक्त्रैश्चतुर्भिर्युतम् ।
पुत्रैः पौत्रगणैः समावृतमजं योगीन्द्रकैः सेवितं
विश्वेषां जनकं पितामहमजं ब्रह्माणमीशं भजे ॥ १४
वक्त्राद्विष्णुमनन्तयोगनिपुणं विश्वस्य रक्षाकरं
भ्रूमध्याद्धरमीश्वरं तु जगतां सन्तारकं तामसम् ।
सृष्ट्वा विश्वविधानके निजसुतान् भृग्वादिमान् तापसान
संयोज्यैव महिम्निगं विधिमजं ब्रह्माणमीशं भजे ॥ १५
देवेन्द्रं च हुताशनं रविसुन रक्षोऽधिपं पाशिनं
वायुं चन्द्रमसं हरं निजसुतं दिक्पालने स्थाप्य वै ।
सूर्यं चन्द्रमसं कुजं रविसुत सौम्यं गुरुं भार्गवं
चक्रे यो ग्रहनायकान् विधिमजं ब्रह्माणमीशं भजे ॥ १६
लोके सप्त मुनीश्वरान् श्रुतिनुतान् गोत्राधिपान् ब्राह्मणान्
सूर्येन्द्वोश्च सुवंशजान् नृपवरान् कृत्वा गुरोर्गोत्रजान् ।
वैश्यांश्चापि तथैव पादजननांश्चाचार्यगोत्रान्वितान्
यश्चक्रे नियति पितामहमज ब्रह्माणमीशं भजे ॥ १७

स्कन्दः—

इमं स्तोत्रवरं कवेरमुनिना संकीर्तितं भावतो
यो वा भक्तिपुरस्सर तु पठते स्वाध्यायकालेऽन्वहम् ।
संप्राप्येह तु सोमयज्ञजफल धातुः प्रसादेन वै
भुक्त्वा भोगवरान् सुतादिलसितः स्वर्गं तथा प्राप्नुयात् ॥ १८
तुष्टः स्तोत्रेण तपसा ब्रह्मा लोकपितामहः ।
उवाच चोलभूपालं कवेरं भक्तपुङ्गवम् ॥ १९

ब्रह्मोवाच—

वरान् वरय मे भक्त यान् यान् कामयसे हृदि ।
दास्यामि सर्वांस्तान् सत्यं तव लोकहिताय च ॥ २०

कवेर उवाच—

यदि तुष्टोऽसि लोकेश यदि देयो वरो मम ।

देवे द्विजे च सत्ये च धर्मे मे रमतां मनः ॥ २१
नदीरूपेण मे राज्ये सर्वत्रापि प्रविश्य वै ।
जीवनदीमातृकां च कर्तुं मम धरां क्रमात् ॥ २२
धनधान्यसमृद्ध्याढ्यां तपोयोग्यां च सर्वदा ।
पुत्रीमेकां देहि देव पराशक्त्यंशसंभवाम ॥ २३

स्कन्दः—

एवं नृपवचः श्रुत्वा सन्तुष्टः पद्मसंभवः ।
उवाच परमप्रीतः कवेरं चोलभूपतिम् ॥ २४

ब्रह्मोवाच—

ममैव मानसी कन्या लोपामुद्रेति विश्रुता ।
शक्त्यंशसंभवा सा तु सर्वतीर्थाधिदेवता ॥ २५
सा योगशक्तिसंयुक्ता श्रीविद्याजपतत्परा ।
श्रीविद्यागूढतत्त्वज्ञा नवयौवनशोभिता ॥ २६
तां ददामि सुतां तेऽद्य योगवैभवतस्तु सा ।
दिव्ययोषित्स्वरूपाढ्या तथैव जलरूपिणी ॥ २७
भवेदेव च तां राजन् कुम्भजाय महात्मने ।
विधिपूर्वं प्रदेहि त्वं द्विधा भूत्वा च ते सुता ॥ २८
लोपामुद्रास्वरूपाढ्या तस्य शुश्रूषणं चरेत् ।
कावेरीनामयुक्ता सा सर्वतीर्थस्वरूपिणी ॥ २९
कमण्डलौ कुम्भजस्य घटे तिष्ठेन्न संशयः ।
घटतोयेन नित्यं तु कुर्यादेव मुनीश्वरः ॥ ३०
कालान्तरे घटात् सा तु निःसृत्य च धरातलम् ।
प्रविश्य गिरिमूर्ध्नश्च ततो वै तव राष्ट्रकम ॥ ३१
शतवक्त्रधरा भूत्वा प्रविशेदेव सागरम् ।
ततो वै तव राष्ट्रं तु कावेर्याश्च प्रसादतः ॥ ३२
जीवनदीमातृकं च सर्वसस्यसमन्वितम् ।
तपोयोग्यं मुनीन्द्राणां भवेदेव न संशयः ॥ ३३
एवं तस्मै वरान् दत्त्वा ब्रह्मा देवैस्तिरोऽभवत् ।
ब्रह्मणः शासनादेव लोपामुद्रा विधेः सुता ॥ ३४
कवेरचोलभूपस्य मानसी तनयाभवत् ।

सर्वावयवसंपूर्णां सर्वलक्षणलक्षिताम् ॥ ३५
सर्वाभरणशोभाढ्यां श्वेतपीताम्बरान्विताम् ।
कवेरचोलभूपालो भार्यया तामपोषयत् ॥ ३६
सा बाला ववृधेऽत्यन्तं शुक्लपक्षे शशी यथा ।
लोपामुद्रा तु सा बाला पूर्वसंस्कारयोगतः ॥ ३७
हादिविद्यां पञ्चदशीं जजाप नियमेन च ।
तस्यास्तु दर्शनं दत्त्वा ललिता परमेश्वरी ॥ ३८
मेरौ श्रीपुरमध्यस्था शक्तिबृन्दनिषेविता ।
लोपामुद्रासुतपसा तस्या वै दर्शनं ददौ ॥ ३९
उवाच तां समालिङ्ग्य स्वाङ्कमारोप्य तां मुदा ।

देव्युवाच—

ममैवांशसमुद्भूते लोपामुद्रे नृपात्मजे ॥ ४०
मम सारूप्यसंयुक्ता पूज्या भव जगत्तले ।
स्वेच्छया स्त्रीस्वरूपाढ्या स्वेच्छया जलरूपिणी ॥ ४१
भवेस्त्वं नात्र सन्देहो लोकोपकारहेतवे ।
लोपामुद्रेति नामाढ्या त्वं तु योषित्स्वरूपिणी ॥ ४२
कावेरीनामयुक्ता वै भवेस्त्वं जलरूपिणी ।
अगस्त्यस्य प्रिया भूत्वा तस्य तोषणमाचर ॥ ४३
जलरूपधरा भूत्वा पितरं परितोषय ।
कल्पान्ते मम सायुज्यं दास्ये तुभ्यं न संशयः ॥ ४४
एवं तस्यै वरान् दत्त्वा तिरोऽभूत् स्वगणैः सह ।

॥ इति श्रीदक्षिणकुटीद्वीपक्षेत्रमाहात्म्ये कावेरीसम्भवो नाम सप्तमोऽध्यायः ॥

## ॥ अथ अष्टमोऽध्यायः [पुष्टिविनायकमहिमानुवर्णनम्] ॥

स्कन्दः—

ततो ब्रह्मा देवगणैः कवेरस्मरणेन च ।
विष्णुना चापि रुद्रेण मरीच्यादिसुतैरपि ॥

वसिष्ठादिमुनीन्द्रैश्च कवेरस्याश्रमं ययौ ।
नारदेन कवेरस्य तनया नृपसत्तमाः ॥ २
कवेरस्याश्रमं प्रापुर्विश्वकर्मा शिवाज्ञया ।
सर्वभोगसमृद्ध्याढ्यं वरं कल्याणमण्टपम् ॥ ३
सह्याद्रिशिखरे तस्य ससर्ज क्षणमात्रतः ।
ब्रह्मणः शासनादेव मित्रावरुणसंभवः ॥ ४
अगस्त्यो मुनिबृन्दैश्च वेष्टितो मण्टपं ययौ ।
कवेरस्तं तु संपूज्य वेदघोषपुरस्सरम् ॥ ५
गन्धर्वाणां गानपूर्वं लोपामुद्रां विधानतः ।
अगस्त्याय ददौ प्रीत्या जलयोषास्वरूपिणीम् ॥ ६
अग्निकार्यं क्रमेणैव कारयामास वै भृगुः ।
ब्रह्मविष्णुमहेशांश्च गौरीं लक्ष्मीं सरस्वतीम् ॥ ७
मरीच्यादींश्च भृग्वादीन् ववन्दे भार्यया मुनिः ।
दत्वाशिषं तयोः सर्वे स्वस्वस्थानं ययुर्मुदा ॥ ८
कवेरचोलभूपालो बहुहर्षपुरस्सरम् ।
विज्ञाप्य स्वाशयं पुत्र्यै विमानवरमास्थितः ॥ ९
भार्यया ब्रह्मलोकं स प्राप सर्वसुदुर्लभम् ।
सर्वतीर्थमयीं देवीं कावेरीं स्वस्य वल्लभाम् ॥ १०
घटे स्थाप्य तपश्चक्रे लोपामुद्रास्वरूपिणी ।
पार्श्वे स्थित्वा च शुश्रूषां कुर्वती धर्मचारिणी ॥ ११
स्वयं देवीं हृदि ध्यात्वा तपश्चक्रे विधानतः ।
एवं गतेषु कालेषु तारको नाम दानवः ॥ १२
ब्रह्मणो वरगर्वेण लोकपीडां चकारह ।
देवानां पदवीं हृत्वा दानवेभ्यो मुदा ददौ ॥ १३
वर्णाश्रमाचारहीनं स्वधास्वाहाविवर्जितम् ।
जगच्चक्रे सुरेन्द्राद्या मुनयः कर्ममार्गिणः ॥ १४
भूम्यां तु दण्डकारण्ये तत्र तत्र निवासिनः ।
कामरूपधराः स्थित्वा तस्य नाशनकाङ्क्षिणः ॥ १५
तपश्चक्रुर्विधानेन कुमारोत्पत्तिहेतवे ।
धर्मलोपस्य जातत्वाज्जम्बूद्वीपे धरातले ॥ १६

अनावृष्टिरभूत्तेन क्षामो जातो विशेषतः ।
जलहीनानि जातानि नदीनदसरांसि च ॥ १७
ब्रह्मेश्वरे वेणुवने स्थित्वेन्द्रो गूढरूपधृत् ।
पुष्पारामं सुसंस्थाप्य दिव्यगन्धसुमैः शिवम् ॥ १८
संपूजयंस्तपश्चक्रे तारकस्य वधाय च ।
अनावृष्ट्या क्षामदोषात् पुष्पोद्यानवनानि च ॥ १९
म्लानतां प्राप्य नाशं च क्रमेण समुपागमन् ।
इन्द्रो दुःखमवाप्यैव कर्तव्यं नाभ्यपश्यत ॥ २०
आगतं नारदं नत्वा देवेन्द्रः सर्वमब्रवीत् ।
उवाच तं प्रसन्नात्मा नारदो दिव्यदर्शनः ॥ २१
वर्णाश्रमाचारधर्मा नाशितास्तारकेण वै ।
ब्राह्मणाद्या धर्महीनाः स्वेच्छाचारसमन्विताः ॥ २२
तिष्ठन्ति भूतले चाद्य तेन क्षामो महानभूत् ।
अनावृष्ट्या नदीपूर्वा जलहीना बभूविरे ॥ २३
प्राणिनस्तेन नश्यन्ति क्षामोऽद्य क्षयदायकः ।
कुमारस्तु समुद्भूय नाशयेत्तारकासुरम् ॥ २४
जलान्नरहितत्वाच्च प्रणश्यन्ति हि मानवाः ।
धरायां धर्महीनत्वात् स्वधास्वाहाविवर्जिताः ॥ २५
देवर्षिपितरश्चापि क्षुत्तृषापरिपीडिताः ।
सजीवशववत्तेऽपि तिष्ठन्ति धरणीतले ॥ २६

नारदः—

इदानीं सर्वतीर्थाढ्या कावेरी तु कवेरजा ।
अगस्त्यस्य घटे सा तु वरा तिष्ठति तत्प्रिया ॥ २७
सह्याद्रिशिखरेऽगस्त्यः स्थित्वा च कुरुते तपः ।
अगस्त्यस्य घटाद्देवी नदीरूपसमन्विता ॥ २८
आनीता यदि चेज्जिष्णो सागरं प्रविशेदपि ।
देवर्षिपितरश्चापि जीवा मानवपूर्वकाः ॥ २९
जलाहारं च संप्राप्य वसेयुः सुखभोगिनः ।
अगस्त्यस्य घटादेव समानेतुं कवेरजाम् ॥ ३०
एकः शक्तो विघ्नराजः शापबाधाविवर्जितः ।
अगस्त्यस्य शापभयान्नान्ये कुर्युर्हरादयः ॥ ३१

लोकस्यापि च ते सौख्यसिद्धये विघ्ननायकम् ।
तपसा तोषयित्वा त्वं तेनानय कवेरजाम् ॥ ३२

इन्द्रः—

को वा विघ्नपतिर्देवः शापबाधाविवर्जितः ।
स्वरूपं तस्य मे ब्रूहि कृपया मुनिसत्तम ॥ ३३

नारदः—

ब्रह्मा विष्णुश्च रुद्रश्च महेशानः सदाशिवः ।
परो बिन्दुः परो नादः परा शक्तिः परः शिवः ॥ ३४
एतानि नव तत्त्वानि प्रोक्तान्यागमशास्त्रके ।
पृथ्वी च सलिलं तेजो वायुराकाशमेव च ॥ ३५
अहंकारो महत्तत्त्वं प्रकृतिः पुरुषस्तथा ।
एतानि नव तत्त्वानि चैषां तु ब्रह्मपूर्वकाः ॥ ३६
नवैव देवताः प्रोक्ता विश्वेषां कारणात्मकाः ।
प्रकृतेः पुरुषाच्चापि यत्परं ब्रह्म तत्स्मृतम् ॥ ३७
ब्रह्मैव परमेशः स्याद्विशुद्धः सत्त्वमायया ।
शिव एव परं ब्रह्म शिव एव परेश्वरः ॥ ३८
पुरुषः शिव एव स्याच्छिवादन्यन्न किञ्चन ।
अनुग्रहार्थं लोकानां शिवः सत्यादिलक्षणः ॥ ३९
स्वेच्छारूपमायया च स्वस्वरूपप्रबोधकैः ।
चिह्नैश्चिह्नितमूर्तिं च गृहीत्वा परमेश्वरः ॥ ४०
महाकैलासभवनं सृष्ट्वा ज्योतिःस्वरूपकम् ।
शक्तिं गणान् स्वयं सृष्ट्वा तिष्ठतीशः कृपावशात् ॥ ४१
ब्रह्मविष्णुमहेशाद्यैः सनकाद्यैश्च योगिभिः ।
गम्यं तत् स्थानमतुलमगम्यं चेन्द्रपूर्वकैः ॥ ४२
इन्द्रादिदेवजातीनां मुनीनां तु हिताय च ।
कैलासाचलपूर्वेषु निवासं कुरुते शिवः ॥ ४३
लोके विघ्नविनाशार्थं ब्रह्मरूपी परः शिवः ।
ब्रह्मविष्णुमहेशाद्यैः प्रार्थितो नादकारणम् ॥ ४४
संपूर्णप्रणवात्मानं स्वात्मानं सुविभाव्य च ।
उत्पाद्य गर्भं गौर्यां तु जनयामास विघ्नपम् ॥ ४५

गजवक्त्रं बालकं च स्वाङ्के स्थाप्य परः शिवः ।
ब्रह्मविष्णुमहेशादिगणानामाधिपत्यकम् ॥ ४६
विघ्नाधिपत्यमतुलं सर्वाग्रे सर्वपूज्यताम् ।
शापबाधाविहीनत्वं ददौ पुत्राय शंकरः ॥ ४७
पुष्टिलक्ष्मीं स्वपुत्रीं तु विघ्नेशाय ददौ हरिः ।
कैलासे पूर्वभागे च नैर्ऋत्यां च दिशि क्रमात् ॥ ४८
द्वारदक्षिणभागे च वासं तस्मै ददौ शिवः ।
कुमुदाचलपूर्वैश्च पुष्टिलक्ष्म्या समन्वितः ॥ ४९
निवासं कुरुते देवो भक्तविघ्नविनायकः ।
सर्वेषामपि कार्याणां सिद्धिदोऽयं प्रकीर्तितः ॥ ५०
एनं शप्तुमगस्त्यस्तु सर्वदा शक्तिवर्जितः ।
अतो भज गणेशानं पुष्टीशं शिवनन्दनम् ॥ ५१

इति श्रीदक्षिणकुटीद्वीपक्षेत्रमाहात्म्ये पुष्टिविनायकमहिमानुवर्णनं नामाष्टमोऽध्यायः ॥

## ॥ अथ नवमोऽध्यायः [कुम्भजघटात् कावेरीबहिर्निर्गमः]

इन्द्रः—

विघ्नेशोपासनार्थं त्वं मन्त्रं ब्रूहि मुनीश्वर ।

नारदः—

एकाक्षरादिमन्त्राश्च बहवो वेदकीर्तिताः ।
आश्रित्य गाणपं मार्गं कथितास्ते विधानतः ॥
शैवं मार्गं समाश्रित्य प्रोक्तोऽद्य गणनायकः ।
शैवमार्गानुसारेण मन्त्रमद्य ब्रवीम्यहम् ॥
गाणेशा वेदमार्गस्था भजन्ति ब्रह्मणस्पतिम् ।
शैवादयः पुष्टिपतिं वदन्ति च भजन्ति च ॥
पुष्टेः पतेर्गणेशस्य मन्त्राणां षोडशाक्षरः ।
वरश्चैवेति कथितो ह्यतस्तेऽद्य च तं ब्रुवे ॥
षोडशाक्षरमन्त्रस्य वासुदेवो ऋषिः स्मृतः ।
अष्टिच्छन्द इति प्रोक्तं देवता पुष्टिविघ्नपः ॥

गंबीजं प्रणवः शक्तिः स्वाहा वै कीलकं स्मृतम् ।
गकारदीर्घषट्कैश्च न्यासास्तारसमन्वितैः ॥ ६

मन्त्रः—

ओं गं गैं गणपतये विघ्नविनाशिने स्वाहा ।

ध्यानम् —

नागास्यं शशिशेखरं त्रिनयनं रक्ताम्बरं तुन्दिलं
पाशाभीतिविषाणकान् सृणिवरं हस्तैश्च सन्धारकम् ।
वामाङ्के वरपुष्टिशक्तिलसितं शेषादिभूषान्वितं
ध्याये चैकरदं महागणपतिं विघ्नान्तकं सिद्धिदम् ॥ ७
त्रिकोणं चापि षट्कोणमष्टपद्मं च वृत्तकम् ।
भूपुरं लघुयन्त्रं स्याद्गणेशस्य परात्मनः ॥ ८
त्रिकोणमध्ये बिन्दौ तु तारके वैघ्नबीजकम् ।
ब्रह्मविष्णुमहेशानां बीजांश्चैव त्रिकोणके ॥ ९
हकारो रुद्रबीजः स्यादकारो विष्णुबीजकः ।
ककारो ब्रह्मबीजः स्याल्लिखनीयास्त्रिबीजकाः ॥ १०
गजजो मलजश्चैव गर्भजो वीर्यसंभवः ।
तेजोद्भवो हास्यजश्च पुष्टीशस्यैव मूर्तयः ॥ ११
एतेषां नामबीजाश्च विलिख्या मूलबीजकैः ।
षट्कोणसन्धिभागेषु चाङ्गमन्त्राँल्लिखेत् क्रमात् ॥ १२
अष्टपत्रे मूलमन्त्रं द्विद्विवर्णं लिखेत्ततः ।
वृत्ते तु मातृकावर्णान् भूपुरे तु दिगीश्वरान् ॥ १३
यन्त्राङ्गानि समग्राणि लिखित्वा पूजयेद्विभुम् ।
भस्मनोद्धूलनं कृत्वा त्रिपुण्ड्रस्यैव धारणम् ॥ १४
यन्त्रे संपूज्य विघ्नेशं रक्तपुष्पैः शमीदलैः ।
दूर्वाङ्कुरैर्मोदकानि सिद्धान्नं च निवेदयेत् ॥ १५
बीजापूरं नारिकेरमपि तस्मै निवेदयेत् ।
अष्टगन्धसमेतेन रक्तगन्धेन वर्तुलम् ॥ १६
अनुलेपं तस्य कुर्यात् पूजान्ते च ततः परम् ।
स्वयं फाले रक्तगन्धं वर्तुलं च विधानतः ॥ १७
धृत्वा गणेशमन्त्रं च जपेद्भावपुरस्सरम् ।

एवमुक्त्वा नारदस्तु स्वेच्छया प्रययौ मुनिः ॥ १८
नारदोक्तप्रकारेण देवेन्द्रो विधिपूर्वकम् ।
संपूज्य यन्त्रे विघ्नेशं स्थाप्य मूर्तिं शिलामयीम् ॥ १९
आपद्धरगणेशेति ददौ नाम सुरेश्वरः ।
षोडशार्णमनुं जप्त्वा तपश्चक्रेऽतिदुष्करम् ॥ २०
वत्सरान्ते गणेशानो दर्शनं प्रददौ विभुः ।
इन्द्रो नत्वा गणेशानं तुष्टुवे भावपूर्वकम् ॥ २१

इन्द्रः—

विघ्नेश्वरं नागमुखं त्रिनेत्रं
चन्द्रार्धचूडं गिरिजातनूजम् ।
कैलासलोके तु सुपूर्वभागे
पुष्ट्या वसन्तं गणनाथमीडे ॥ २२

स्कन्दाग्रजं विघ्नविनाशदक्षं
सिद्धिप्रदं भैरवपूर्वसेव्यम् ।
संपूजितं विष्णुहरेन्द्रपूर्वै-
र्लक्ष्मीसमेतं गणनाथमीडे ॥ २३

कैलासलोकस्य तु पूर्वभागे
स्वानन्दसौख्यप्रददिव्यलोके ।
गाणेश्वरे भोग्यसुखेन युक्ते
वसन्तमीशं गणनाथमीडे ॥ २४

शैवैः सुपूज्यं वरवैष्णवैर्वै
शाक्तैश्च सौरैरपि गाणपत्यैः ।
सर्वेषु कार्येष्वपि पूज्यमानं
पुष्टीश्वरं त्वां गणनाथमीडे ॥ २५

शापैर्विहीनं सुरसिद्धसङ्घैः
शप्तुं त्वशक्यं शिवशक्तिपुत्रम् ।
स्वातन्त्र्ययुक्तं मुनिसिद्धपूज्यं
पुष्टीश्वरं त्वां गणनाथमीडे ॥ २६

सारूप्ययुक्तं निजनायकस्य
स्वानन्दलोके गणबृन्दमध्ये ।

प्रमोदपूर्वैः परितः सुसेव्यं
पुष्टीश्वरं त्वां गणनाथमीडे ॥ २७

स्कन्दः—

इन्द्रस्य तपसा भक्त्या पूजनेन सुतोषितः ।
गणेश्वरः पुष्टिपतिः प्राह तं सुरनायकम् ॥ २८

गणेशः—

वरान् वृणु सुरेशान दास्ये तुभ्यं न संशयः ।

इन्द्र उवाच—

अनावृष्ट्या विश्वमिदं पीड्यते क्षुत्तृषादिभिः ॥ २९
कावेरी सर्वतीर्थाढ्या कुम्भजस्य महात्मनः ।
घटे तिष्ठति तेनैव तपोयोगेन बन्धिता ॥ ३०
पितृवाक्यं पालयितुं शक्तिहीना हि तिष्ठति ।
नदीरूपयुतां कृत्वा कुरु सागरगामिनीम् ॥ ३१
शतवक्त्रयुतां कृत्वा स्थलेऽस्मिन्नेकवक्त्रकाम् ।
समानय गणेशान मां च लोकैः सुतोषय ॥ ३२
एवं तत्प्रार्थनां श्रुत्वा गणेशानो मुदान्वितः ।
करिष्यामि तथैवेति तत्क्षणाच्च तिरोऽभवत् ॥ ३३
घटस्थिता तु कावेरी पितृवाक्यं सदैव सा ।
स्मरन्ती च परां शक्तिं प्रार्थयामास सर्वदा ॥ ३४
कदाचिच्च गणेशानो लीलया सह्यपर्वतम् ।
जगाम कुम्भजस्यैव शरीरे बहुमात्रकम् ॥ ३५
उपाधिं जनयामास तदर्थं च मुनिर्ययौ ।
वायसं रूपमास्थाय न्युब्जं चक्रे घटं तदा ॥ ३६
घटे स्थिता तु कावेरी जलरूपसमन्विता ।
गिरिमूर्ध्नि धरां प्राप गणेशानस्य शासनात् ॥ ३७
मेघो भूत्वा पुष्टिलक्ष्मीर्ववर्ष च दिनत्रयम् ।
प्रवाहबहुलैर्युक्ता गिरिं भित्त्वा तथा धराम् ॥ ३८
दृश्यादृश्यस्वरूपा सा समतिक्रम्य केरलम् ।
चेरभूमिं च संप्राप कुम्भजस्तु ततः परम् ॥ ३९
घटान्तिकं समागत्य घटं दृष्ट्वा रुषान्वितः ।
शुद्धिं कृत्वा यथान्यायं वटुं तत्र ददर्श ह ॥ ४०

न्युब्जं कृतं त्वनेनेति मत्वायं मुनिसत्तमः ।
प्रहर्तुं बालकं तं तु हस्तमुद्धृत्य चाययौ ॥ ४१
बालको व्योममार्गेण हसन् गन्तुं प्रचक्रमे ।
कुम्भजः पृष्ठतो बालं प्रहर्तुं च समाययौ ॥ ४२
कुम्भजेन त्रिशीर्षस्थगिरिं प्राप गणेश्वरः ।
अगस्त्यः कुट्टनं कर्तुं प्रारेभे तस्य मस्तके ॥ ४३
प्रकटोऽभूद्गणेशानो गजवक्त्रविराजितः ।
गजवक्त्रं विघ्नराजं दृष्ट्वागस्त्यः स्वमस्तके ॥ ४४
चकार कुट्टनं भक्त्या ववन्दे विघ्ननायकम् ।
गणेशसूक्तैर्विविधैस्तुष्टाव गणनायकम् ॥ ४५
बद्धाञ्जलिपुटो भूत्वा प्रर्थयामास विघ्नपम् । ४६

॥ इति श्रीदक्षिणकुटिद्वीपक्षेत्रमाहात्म्ये कुम्भजघटात् कावेरीबहिर्निर्गमो नाम नवमोऽध्यायः ॥

## ॥ अथ दशमोऽध्यायः [हेरण्डमुनिकृतकवेरजाप्रत्यानयनम्] ॥

अगस्त्यः—

अज्ञानात्ते स्वरूपस्य मत्वा त्वां ब्राह्मणं वटुम् ।
तव शीर्षे कुट्टनं वै कर्तुमेव समुद्यतः ॥ १
ज्ञात्वा गजाननं दृष्ट्वा कुट्टनं मम मस्तके ।
कृतं तेन गणाधीश मस्तके स्वस्य ये जनाः ॥ २
ध्यात्वा त्वां भावपूर्वं तु क्रमात् कुर्वन्ति कुट्टनम् ।
तेषां विघ्न निवार्यैव कार्यसिद्धिं कुरु प्रभो ॥ ३
अस्मिन् गिरौ स्थले चास्मिन् सर्वदा वस विघ्नप ।
भक्तकामान् पूरय त्वं पुष्टिलक्ष्मीसमन्वितः ॥ ४
कमण्डलौ मम विभो कावेरीतोयमुत्तमम् ।
देहि देव नमस्तुभ्यं विघ्नराज नमोऽस्तु ते ॥ ५

स्कन्दः—

एवं तत्प्रार्थनां श्रुत्वा कावेरीसलिलैः प्रभुः ।
कमण्डलुं तस्य तदा पूरयित्वाब्रवीत्तदा ॥ ६

यद्यच्च प्रार्थितं तेऽद्य सर्वं भवतु तत्तथा ।
एवं तस्मै वरान् दत्त्वा गणराजस्तिरोऽभवत् ॥ ७
गणराजस्य मूर्तिं तु प्रतिष्ठाप्य गिरौ मुनिः ।
लोहमूर्तिं पुष्टिलक्ष्म्याः संस्थाप्य मुनिसत्तमः ॥ ८
पुपूजे विधिपूर्वं तं स्वस्थानं प्रययौ ततः ।
कावेर्यागमनं श्रुत्वा नारदान्नृपपुत्रकौ ॥ ९
राजशेखरभूपालो हरिध्वजनृपोऽपि च ।
भार्यया मन्त्रिभिश्चैव ब्राह्मणाद्यैश्च किंकरैः ॥ १०
वेदवाद्यघोषपूर्वमभिगम्यैव जग्मतुः ।
चोले तु पश्चिमप्रान्ते प्रवाहरूपिणीं पराम् ॥ ११
कावेरीं विधिवत् पूज्य तुष्टुवुर्भावपूर्वकम् ।

नृपादयः—

कवेरकन्ये जगदेकमातः
शिवांशजे कुम्भजवल्लभेऽम्ब ।
नदीस्वरूपे मुनिदेवपूजिते
भजामहे त्वां वरलोकसुन्दरीम् ॥ १२
विरिञ्चिचित्तोद्भवदेवकन्ये
कवेरचोलस्य सुते वरिष्ठे ।
हिरण्यगर्भेश्वरपूर्वपूज्ये
भजामहे त्वां वरलोकसुन्दरीम् ॥ १३
सह्योद्भवे शङ्करपूर्वकाणां
सन्तोषदे क्षेत्रवरैः सहस्रैः ।
संशोभमाने बहुतीर्थयुक्ते
भजामहे त्वां वरलोकसुन्दरीम् ॥ १४
तीर्थस्वरूपे देवसरस्स्वरूपे
गङ्गास्वरूपे यमुनास्वरूपे ।
कौमण्डलीरूपसमन्वितां वै
भजामहे त्वां वरलोकसुन्दरीम् ॥ १५

स्कन्दः—

एवं स्तुत्वा च कावेरीं प्रवाहेण ययुश्च ते ।
भ्रातरावनुसृत्यैव नदी याता कवेरजा ॥ १६

मातृभूतेशपुर्याश्च पश्चिमे तु कवेरजाम् ।
सार्धयोजनदूरे तु संपूज्य च नृपोत्तमौ ॥ १७
द्विधा भूत्वा गणैः सार्धं स्वस्वराष्ट्रं च जग्मतुः ।
राजशेखरभूपालः स्वगणैः परिवारितः ॥ १८
स्वराज्ये दक्षिणान्तेन भागेनैव जगाम च ।
हरिध्वजो नृपवरो मन्त्रिपूर्वैः समन्वितः ॥ १९
उत्तरान्तं स्वाराज्ये तु समाश्रित्य जगाम च ।
दृष्ट्वा तौ भ्रातरौ देवी कावेरी भ्रातृवत्सला ॥ २०
द्विधा भूत्वा समाश्रित्य भ्रातरौ च ययौ क्रमात् ।
राजशेखरभूपालं समाश्रित्य गता वरा ॥ २१
चिदम्बरे सागरं सा प्रविवेश कवेरजा ।
इयमुत्तरकावेरी बुधैस्संकीर्त्यतेऽनघा ॥ २२
देवी दक्षिणकावेरी हरिध्वजमुपाश्रिता ।
बहूनि क्षेत्रवर्याणि स्पृशन्ती च ययौ मुदा ॥ २३
शक्तिकान्तारके पुण्ये सिद्धानां बिलवासिनाम् ।
आज्ञया भूतनाथस्तु कावेरीं तोयरूपिणीम् ॥ २४
बिलस्यान्तर्हठेनैव वरदर्पान्निनाय ह ।
अनागतां तोयरूपां दृष्ट्वा तत्रैव शोषिताम् ॥ २५
अतीव दुःखितो भूत्वा चोलेन्द्रोऽयं हरिध्वजः ।
भ्रमंस्तत्र वनान्तःस्थं हेरण्डं सिद्धपुङ्गवम् ॥ २६
कपालभिक्षुं ध्यानस्थं दृष्ट्वा भक्त्या ननाम च ।
कावेर्यागमनादीनि वने तस्मिंश्च शोषणम् ॥ २७
उवाच मुनिशार्दूलं शोषणे कारणं नृपः ।
पप्रच्छ विनयेनैव तमाह मुनिसत्तमः ॥ २८

हेरण्ड उवाच—

शक्तिकान्तारके क्षेत्रे कपर्दीशशिवालयात् ।
अधोभागे बिलं श्रेष्ठं पुण्यदं तु विराजते ॥ २९
वसन्ति तत्र सिद्धाश्च सदा ध्यानपरायणाः ।
कावेर्यागमनं ज्ञात्वा बिलद्वारप्रपालक ॥ ३०
अत्रानुष्ठानसंसिद्ध्यै कावेरीतोयमुत्तमम् ।

समानीय प्रवाहेण सरश्चैनं प्रपूरय ॥ ३१
इत्याज्ञां भूतनाथाय ददुस्ते सिद्धसत्तमाः ।
नृपाद्बलिं काङ्क्षमाणो भूतराजो हठेन च ॥ ३२
कावेरीतोयमखिलं नयत्येव बिले वरे ।
तपस्विनं नृपं वाथ बलिं विधिपुरस्सरम् ॥ ३३
दत्त्वा भूतस्तु सन्तोष्यस्तुष्टो भूतः कवेरजाम् ।
त्यक्त्वा गच्छेन्न सन्देहो लोकानां हितकाम्यया ॥ ३४
तोषणं कुरु भूतस्य बलिदानेन राष्ट्रप ।
एवं योगिवचः श्रुत्वा सन्तुष्टो नृपसत्तमः ॥ ३५
लोकानां च हितार्थं तु कावेर्यागमनाय च ।
स्वात्मानं च बलिं दातुं निर्णीय सुतराष्ट्रकम् ॥ ३६
दत्त्वा मन्त्रिवशे राजा हेरण्डाश्रमकात्ततः ।
शक्तिकान्तारके श्रेष्ठे बिलद्वारं ययौ मुदा ॥ ३७
बोधिता मन्त्रिणा राज्ञी हेरण्डं मुनिसत्तमम् ।
पुपूज सुविधानेन सा चकार प्रदक्षिणम् ॥ ३८
ननाम भक्तिपूर्वं तु हेरण्डो भृशहर्षितः ।
दीर्घसौमङ्गल्यवती भवेत्याशिषमादरात् ॥ ३९
प्रददौ भर्तृवृत्तं च तस्मिन् प्राह नृपप्रिया ।
स्ववाक्यपालनार्थं तु त्वरावान् सिद्धपुङ्गवः ॥ ४०
नृपस्य निकटं गत्वा निवार्य नृपसत्तमम् ।
श्रीवाणीसहितं श्वेतगणेशं सिद्धिदायकम् ॥ ४१
बृहदम्बां कपर्दीशं ध्यात्वा श्लोकं पपाठ ह

हितं न वाच्यम् अहितं न वाच्यं
रहिताहितं नैव तु भाषणीयम् ।
हितोपदेशेन बिलं प्रविष्टो
हेरण्डको नाम कपालभिक्षुः ॥ ४२

स श्लोकमुक्त्वा बल्यर्थं बिले तोये पपात च ।
शिवरूपधरं सिद्धं कपर्दीशेन शंभुना ॥ ४३
श्वेतविघ्नेश्वरैणेव रक्षितं पार्श्वयोः क्रमात् ।
दृष्ट्वा भूतो भयाविष्टस्त्यक्त्वा तां तु कवेरजाम् ॥ ४४

पातालं स्वस्थलं प्राप कावेरी बहिराययौ ।
हरिध्वजगतिं प्राप्य समुद्रे च विवेश सा ॥ ४५
श्वेतारण्ये क्षेत्रवरे समुद्रो विधिपूर्वकम् ।
कवेरजां तु जग्राह सन्तुष्टस्तु हरिध्वजः ॥ ४६
कावेरीसङ्गमप्रान्ते कावेरीपट्टणं वरम् ।
कारयित्वा पुरं रम्यं तस्मिन् स्थित्वा स्वराष्ट्रकम् ॥ ४७
पालयामास धर्मात्मा सुरेन्द्रस्य हिताय च ।
विषाणकोट्या भूमिं तु भित्त्वा तत्र च तत्र च ॥ ४८
कावेर्या मार्गमतुलं चकाराहश्यरूपवान् ।
शाखानदीश्च कावेर्याः प्रथमं विघ्ननायकः ॥ ४९
उत्पाद्य तासां मार्गांश्च भूमिं भित्त्वा ददौ क्रमात् ।
कौमण्डली वियद्गङ्गा प्रावाली हरिवाक्यजा ॥ ५०
मणिकर्णी च कावेर्याः शाखानद्यः प्रकीर्तिताः ।
एकैकायाश्च सन्त्येव शाखानद्यः पृथक् पृथक् ॥ ५१
उपनद्यस्तथा नद्यः कावेर्याः सुसमुत्थिताः ।
कावेर्या मुखरूपेण कथ्यन्ते निगमेषु च ॥ ५२
कावेरी शतवक्राढ्या चेति शास्त्रेषु कथ्यते ।
प्रावालीति प्रविख्याता कावेरी सप्तवक्रका ॥ ५३
प्रावाल्याश्चैकवक्रं तु ययौ ब्रह्मपुरं वरम् ।
तेन तुष्टः सुरेशानो बहु हर्षमवाप च ॥ ५४
पुष्पोद्यानं पालयंश्च शिवभक्तिं चकार ह ।
शिवस्यैव प्रसादेन कुमारः सम्बभूव च ॥ ५५
कुमारस्तारकं दुष्टं जघान समरे गणैः ।
स्वेषां च पदवीं प्राप्य देवाश्च मुनयोऽपि च ॥ ५६
अत्यानन्दयुतास्तस्थुः शंकरस्य प्रसादतः । ५७

॥ इति श्रीदक्षिणकुटीद्वीपक्षेत्रमाहात्म्ये हेरण्डमुनिकृतकवेरजाप्रत्यानयनं नाम दशमोऽध्यायः ॥

## ॥ अथैकादशोऽध्यायः [ सुधागणेशचरितम् ] ॥

सनत्कुमारः—

श्रीदक्षिणकुटीद्वीपक्षेत्रोत्पत्तिः प्रकीर्तिता ।
कावेर्या अपि जन्मादि चरित्रं परिकीर्तितम् ॥ १
क्षेत्रस्यास्य च कावेर्याः सम्बन्धः को वद प्रभो ।

स्कन्द उवाच—

सर्वतीर्थमयी श्रेष्ठा कावेरी ब्रह्मनन्दिनी ॥ २
कावेर्या दक्षिणायास्तु प्रथमं वक्त्रमीरितम् ।
गङ्गा देवी गणेशस्य शासनाद्धर्षसंयुता ॥ ३
कावेरीतीर्थमध्यात्तु प्रथमं तु विनिःसृता ।
वियन्नदीति सा प्रोक्ता प्रवाहबहुलान्विता ॥ ४
पुनर्गणेशो भगवान् खात्वा भूमिं ततः परम् ।
प्रददौ मार्गमन्यच्च परा तन्मार्गगामिनी ॥ ५
ख्याता नदीति विख्याता वियन्नद्याः समुद्भवा ।
कावेरीतोयमाश्रित्य स्थिता गङ्गा महानदी ॥ ६
शाखानदी स्वयं भूत्वा कावेर्यां संबभूव च ।
ख्याता वियन्नदी चेति द्विविधा सा बभूव च ॥ ७
कमण्डलौ स्थिता गङ्गा ब्रह्मणः परमेष्ठिनः ।
कौमण्डली नदी चेति मध्यमेशस्थले स्मृता ॥ ८
कावेरीतीर्थमाश्रित्य सुस्थिता विधिशासनात् ।
भूमिं खात्वा च तस्यास्तु ददौ मार्गं शिवात्मजः ॥ ९
कावेरीतीर्थमध्यात्तु प्रवाहबहुलान्विता ।
गणेशदत्तमार्गेण सागरं प्रययौ मुदा ॥ १०
कौण्मडली नदी चेति सा नदी परिकीर्तिता ।
कौमण्डल्याश्च खातायाः मध्यगं क्षेत्रमुत्तमम् ॥ ११
श्रीदक्षिणकुटीद्वीप सत्यमेतन्न संशयः ।
कावेर्योर्मध्यगं क्षेत्रमिदं योगिन् पुरातनम् ॥ १२
स्वात्मपूजाविरहितो मुनीन्द्रैरपि वञ्चितः ।
इन्द्रो दुःखयुतो भूत्वा हरिध्वजनृपस्य च ॥ १३
पुत्रो भूत्वा चोलराज्यं पालयामास धर्मवान् ।
नृपोऽयं शक्तिकान्तारे पुरमेकं विचित्रकम् ॥ १४

कारयित्वा शिल्पिभिस्तु योजनद्वयविस्तृतम् ।
श्वेतविघ्नेशनगरमिति नाम ददौ नृपः ॥ १५
उवास तस्मिन्नगरे कपर्दीशे सुभक्तिमान् ।
कदाचिन्नृपवर्योऽगं मृगयार्थं वनं ययौ ॥ १६
दैवात् कृष्णद्वीपकुटीक्षेत्रं गत्वा सदाशिवम् ।
संपूज्य स प्रतस्थेऽथ स्वपुरं मन्त्रिसत्तमैः ॥ १७
श्रीदक्षिणकुटीं प्राप लिङ्गं स्वायंभुवं वरम् ।
दृष्ट्वाश्चर्ययुतो भूत्वा शिल्पिभिर्बहुचित्रितम् ॥ १८
आलयं कारयित्वा स स्वपुर तु ततो ययौ ।

सनत्कुमारः—

स्वात्मपूजात्यागदोषः कथमिन्द्रस्य चाभवत् ॥ १९
तच्चरित्रं च मे ब्रूहि कृपया त्वं षडानन ।

स्कन्द उवाच—

क्षीराब्धिमथने पूर्वं हालाहलमभूत् किल ॥ २०
तद्भुक्त्वा पार्वतीकान्तो लोकरक्षां चकार ह ।
मग्नोऽभवन्मन्थरस्तु देवा जाताश्च दुःखिनः ॥ २१
कूर्मरूपं स्वय धृत्वा पालको विष्णुरव्ययः ।
दधार पृष्ठभागे तु नालभन्त सुधा तदा ॥ २२
एवं गतेषु कालेषु श्रमाविष्टाः सुरोत्तमाः ।
उद्बोधिता नारदेन विस्मृता विघ्ननायकम् ॥ २३
ब्रह्माणं शरण प्रापुस्तदा ब्रह्मा मुदान्वितः ।
क्षीरस्य मथनाज्जातसुधाफेनेन वै तदा ॥ २४
विघ्नेशमूर्ति चक्रे च देवा विष्णुपुरोगमाः ।
अभ्यर्च्य घनसारेण मोदकानि निवेद्य च ॥ २५
सुधां च प्रार्थयामासुः क्षिप्रमेव सुरोत्तमाः ।
तथा तेभ्यो वरं दत्त्वा तिरोऽभूद्गणनायकः ॥ २६
सुधां लब्ध्वा सुराः सर्वे स्वर्गे तु न्यवसन् सुखम् ।
सुधामूर्तिं गणेशस्य सौवर्णे संपुटे हरिः ॥ २७
संस्थाप्य भक्त्या नित्यं तु पूजयामास सादरम् ।
पाकेन दानवेन्द्रेण पीडितः सुरनायकः ॥ २८

देवैः साकं महाविष्णुं शरणं प्राप हृष्टधीः ।
सुधामूर्तिं संपुटस्थां दत्त्वेन्द्राय जनार्दनः ॥ २९
भक्त्या पूजय विघ्नेशं प्रत्यहं विधिपूर्वकम् ।
पाकादिदानवान् हत्वा निरातङ्कश्च निर्भयः ॥ ३०
दिव्यान् भोगान् भोक्ष्यसे त्वमिति प्राह सुरेश्वरम् ।
इन्द्रो गृहीत्वा तां मूर्तिं स्वस्थानमगमत् सुरैः ॥ ३१
गणराजं दिव्यमञ्चे संस्थाप्यापूजयद्विभुम् ।
गणराजप्रसादेन पाकादीन् दानवान् खलान् ॥ ३२
रणे हत्वा दिव्यभोगान् बुभुजे सुरनायकः ।
शक्तिकान्तारकावासा मुनयो ब्रह्मवित्तमाः ॥ ३३
कपर्दीशमुखाम्भोजात् सुधामूर्तिचरित्रकम् ।
श्रुत्वा तां मूर्तिमतुलां संपूजयितुमुत्सुकाः ॥ ३४
शंकरं शरणं प्रापुः कपर्दीशो महेश्वरः ।
आनयिष्ये सुधामूर्तिं सुरेन्द्रान्नात्र संशयः ॥ ३५
अस्मिन् स्थले स्थापयिष्य इत्याह मुनिसत्तमान् ।
क्षेत्राटने सुरेन्द्रस्य मतिं प्रादात् सदाशिवः ॥ ३६
संपुटेन गणेशानं गृहीत्वा सुरनायकः ।
केदारमुख्यक्षेत्राणि गत्वा तत्र च तत्र च ॥ ३७
संपूजयन् महादेवं पवित्रं शक्तिकाननम् ।
सम्प्राप परमेशस्य चालयं प्रययौ हरिः ॥ ३८
आलयस्य बहिर्भागे बलिपीठसमीपके ।
संस्थितं मुनिबालं तु वीक्ष्याह सुरनायकः ॥ ३९
बाल त्वं संपुटं धृत्वा तिष्ठात्राहं शिवालयम् ।
गत्वा संपूज्य गिरिजानायकं परमेश्वरम् ॥ ४०
क्षिप्रमेवागमिष्यामि सम्पुटं भूतले वटो ।
शासनाच्च गुरोर्मेऽधः स्थापनीयं न जातु हि ॥ ४१
अतो हस्तेन सन्धृत्य तिष्ठात्र कृपया मयि ।
क्षिप्रमेष्ये न सन्देह इत्युक्त्वा वटुहस्तके ॥ ४२
ददौ तत् संपुटं जिष्णुर्वटुः प्रोवाच तं तदा ।
आह्वयामि त्रिवारं त्वां तदन्तः क्षिप्रमेव च ॥ ४३
आगन्तव्यं न चेन्नाहं सोढुं शक्तिविवर्जितः ।

बलिपीठस्य विवरे स्थाप्य यास्यामि मे गृहम् ॥ ४४
एवं तद्वचनं श्रुत्वा त्वरया प्रययौ हरिः ।
आहूय तं त्रिवारं तु वटुरूपी सदाशिवः ॥ ४५
बलिपीठस्य विवरे स्थाप्य संपुटमादरात् ।
पूजां तस्य ग्रहीतुं च लिङ्गमध्ये गतोऽभवत् ॥ ४६

॥ इति श्रीदक्षिणकुटीद्वीपक्षेत्रमाहात्म्ये सुधागणेशचरितं नामैकादशोऽध्यायः ॥

---

## ॥ अथ द्वादशोऽध्यायः [रुद्रपाशुपतमखः] ॥

स्कन्दः—

संपूज्य च कपर्दीशं बहिर्देशं समाययौ ।
अदृष्ट्वा बालकं चेन्द्रो बहुदुःखसमन्वितः ॥ १
बलिपीठस्य विवरे ददृशे सपुटं तदा ।
ततो हर्षयुतो भूत्वा जगृहे संपुटं हरिः ॥ २
बलिपीठस्य विवरे लग्नाभून्मूर्तिरुत्तमा ।
संपुटं हस्तगं जातं तेनेन्द्रो दुःखसंयुतः ॥ ३
प्रणम्य भक्त्या तां मूर्तिमुद्धर्तुमुपचक्रमे ।
बलिपीठेन देवेन्द्रः शक्तिहीनो बभूव च ॥ ४
मुञ्चन्नश्रूणि नेत्रेभ्यस्तुष्टाव श्वेतविघ्नपम् ।

इन्द्रः—

सत्यानन्दविराजिते निजगते रक्ताम्बुजे संस्थिते
सत्ये ज्योतिषि मध्यगं गजमुखं स्वानन्दतेजोमयम् ।
चिन्तारत्नविराजितं निजगले रत्नादिभिर्भूषितं
ध्याये श्वेतगणेश्वरं निजपतिं वाणीरमासंयुतम् ॥ ५
क्षीराम्भोनिधिमन्थने सुरगणैः संपूजितं सिद्धये
पीयूषाकृतिधारकं गणपतिं विघ्नान्तकं सिद्धिदम् ।
आधिव्याधिहरं नृणां तु सुखदं मृत्युञ्जयं पुष्टिदं
ध्याये श्वेतगणेश्वरं निजपतिं वाणीरमासंयुतम् ॥ ६
सिन्दूरासुरपीडितैर्मुनिसुरैः संप्रार्थितो विष्टपे
भूत्वा शंकरनन्दनो हिमगिरौ शक्तेश्च गर्भोद्भवः ।

शुण्डाग्रेण तु दानवं विधिसुतं संगृह्य जघ्ने च तं
ध्याये श्वेतगणेश्वरं निजपतिं वाणीरमासेवितम् ॥ ७

स्तुत्या तुष्टो गणेशानो व्योमरूपी जगाद तम् ।
अस्मिन् स्थले सदा वस्तुं लोकानुग्रहहेतवे ॥ ८
वाञ्छामि त्वं समागत्य वत्सरस्यैकवारकम् ।
संपूज्य गच्छ देवेन्द्र कार्यसिद्धिश्च ते भवेत् ॥ ९
एवं श्रुत्वा च देवेन्द्रो दुःखहर्षसमन्वितः ।
कारयित्वा गणेशस्य रथवद्गृहमुत्तमम ॥ १०
स्वर्गलोकं ततो गत्वा प्रतिवर्षं पुपूज तम् ।
निरन्तरं गणेशस्य कर्तुं वै पूजनं हरिः ॥ ११
हरिध्वजनृपस्यैव पुत्रोऽभूत्तेन हेतुना ।
इन्द्रचोलसुतो धीमान् जयचोल इति श्रुतः ॥ १२
हेरण्डं तु मुनीशानं तोषयित्वा विधानतः ।
सम्प्राप तं गुरुं पश्चात् पप्रच्छ विनयेन तम् ॥ १३

जयचोलः—

शताश्वमेधयज्ञेन प्राप्येन्द्रपदवीं मुने
एकेनैव तु यज्ञेन तां लब्धुं सुलभेन च ॥ १४
प्राप्तुं देवेन्द्रपदवीमुपायं कृपया वद ।

हेरण्डः—

रुद्रपाशुपतो नाम यज्ञो वेदेषु विश्रुतः ॥ १५
तेन तुग्रं भवेच्छंभुर्दद्यात् सुरपतेः पदम् ।
श्रीदक्षिणकुटीद्वीपसंज्ञं क्षेत्रं महत्तरम् ॥ १६
सार्धयोजनदूरे तु पश्चिमे चैव तिष्ठति ।
स्वायंभुवं वरं क्षेत्रं कल्पान्तेऽप्यविनश्वरम् ॥ १७
स्वायंभुवं वरं लिङ्गं स्वयंभूतेशनामकम् ।
आदिकल्पे पूजितं तद्ब्रह्मविष्णुमहेश्वरैः ॥ १८
वैवस्वतेन मनुना वसिष्ठेनापि पूजितम् ।
तत्र गत्वा द्विजैः सार्धं यज्ञोपकरणान्वितः ॥ १९
स्वयंभूतेश्वरस्यैव सन्निधौ विधिपूर्वकम् ।
रुद्रपाशुपतं यज्ञं कुरु त्वं शिवतुष्टये ॥ २०

क्षेत्रस्यैव प्रभावेण शतयज्ञफलं भवेत् ।
अश्वमेधेन तुल्यः स्याद्रुद्रपाशुपतो मखः ॥ २१
एकोऽप्यत्र कृतो यज्ञो हयमेधशतोद्भवम् ।
फलं दद्यात् सुरेन्द्रत्वं तत्र सिध्येन्न संशयः ॥ २२
हेरण्डवचनं श्रुत्वा जयचोलधरापतिः ।
श्रीदक्षिणकुटीद्वीप गत्वा संभारसंयुतः ॥ २३
ब्राह्मणैर्मन्त्रिपूर्वैश्च गत्वायं तत्र वै स्थितम् ।
वसिष्ठं यज्ञतत्त्वज्ञं मुनिं तपसि सुस्थितम् ॥ २४
आचार्यं वरयामास रुद्रपाशुपते मखे
गौतमादिमुनीन्द्रैश्च कारयामास वै मखम् ॥ २५
समाप्तौ तल्लिङ्गमध्यात् प्रादुरासीच्छिवायुतः ।
स्वयंभूतेश्वरः शंभुः सर्वैश्च नृपसत्तमः ॥ २६
प्रणम्य रुद्रसूक्तेन तुष्टावाथर्वकेण च ।
उवाच तं समालिङ्ग्य स्वयंभूतेश्वरः शिवः ॥ २७

शिव उवाच—

कृतेनानेन यज्ञेन तुष्टोऽहं मुनिसत्तमैः ।
शताश्वमेधजं पुण्यं तुभ्यं दत्तं मयाधुना ॥ २८
मन्वन्तरे तु नवमे त्वमिन्द्रश्च भविष्यसि ।
तावदन्तं स्वर्गलोके दिव्यसिंहासने वरे ॥ २९
इन्द्रेणैव सह स्थित्वा दिव्यान् भोगांश्च भोक्ष्यसे ।
एवं तस्मै वरं दत्त्वा लिङ्गे शंभुस्तिरोऽभवत् ॥ ३०
जयचोलो लक्षवर्षान् पालयित्वा स्वराष्ट्रकम् ।
पुत्रे राज्यं तु विन्यस्य सुरेन्द्रभवनं ययौ ॥ ३१

सनत्कुमारः—

पूर्वं तु मनुना सार्धमिहागत्य मुनीश्वरः ।
वसिष्ठो ब्रह्मतनयः संपूज्य परमेश्वरम् ॥ ३२
वसिष्ठेशश्चेति नाम दत्त्वा वव्रे वरं महत् ।
इलां तु पुरुषं कृत्वा मनुना च ययाविति ॥ ३३
कथितं स वसिष्ठश्च स्थलेऽस्मिंस्तपसि स्थितः ।
इत्येवं कथ्यते चाद्य कथं तत्संभवेद्वद ॥ ३४

स्कन्दः—

स्वायंभुवान्तरे पूर्वं ये जाता ब्रह्मणः सुताः ।
वैवस्वतमनौ चापि भृगुपूर्वा विधेः सुताः ॥ ३५
जायन्ते च धरण्यां तु भिन्नमार्गेण योगिप ।
वरुणाच्च भृगुर्जातो वह्नेर्वा अङ्गिरा मुनिः ॥ ३६
मित्रावरुणयोगिभ्यामुर्वश्यां कुम्भजस्तथा ।
वसिष्ठो निर्गमश्चापि सञ्जाता लोकहेतवे ॥ ३७
सूर्यवंशसमुद्भूतो निमिर्नाम नृपोत्तमः ।
तस्य यज्ञे वसिष्ठस्तं देहहीनो भवेति च ॥ ३८
शशाप तेन राजापि वसिष्ठं तं शशाप च ।
वसिष्ठो निमिशापेन देहहीनो बभूव च ॥ ३९
ततो मित्रावरुणयोः सुतोऽभूत्तेन दुःखितः ।
पूर्ववज्ज्ञानसिद्ध्यर्थं स्थलमेतदुपागमत् ॥ ४०
अत्राश्रमं प्रकल्प्यैव तपश्चक्रे शतत्रयम् ।
वसिष्ठेशेति देवाय नाम दत्त्वा पुनर्ह्ययम् ॥ ४१
संपूजयन् शिवं चात्र स्थितोऽभून्मुनिसत्तमः ।
अत्रैव नियतं वासं चकार मुनिसत्तमः ॥ ४२
वसिष्ठाश्रम इत्येव स्थलस्यास्य मुनीश्वर ।
विश्रुतं चाभवन्नाम वसिष्ठाय महात्मने ॥ ४३
ब्रह्मज्ञानं पूर्ववच्च वसिष्ठेशो ददौ मुदा ।
तदारभ्य वसिष्ठेशः स्वयंभूतेश्वरोऽभवत् ॥ ४४

॥ इति श्रीदक्षिणकुटीद्वीपक्षेत्रमाहात्म्ये रुद्रपाशुपतमखो नाम द्वादशोऽध्यायः ॥

---

## ॥ अथ त्रयोदशोऽध्यायः [कार्तवीर्यप्रभावः] ॥

स्कन्दः—

बुधश्चन्द्रसुतो धीमान् बुधपुत्रः पुरूरवाः ।
आयुः पुरूरवःपुत्रो धर्मात्मा देवभक्तिमान् ॥ १
नहुषस्तस्य पुत्रस्तु ययातिस्तस्य नन्दनः ।
ययातेश्च यदुः पुत्रस्तस्य पुत्रः सहस्रदः ॥ २

सहस्रदस्य तनयो हैहयो भीमविक्रमः ।
हैहयस्य सुतो धीमान् धर्मनेत्र इति श्रुतः ॥ ३
कार्तस्तु धर्मनेत्रस्य साहजस्तस्य पुत्रकः ।
महिष्मांस्तस्य पुत्रः स्याद्भद्रश्रेणस्तु तत्सुतः ॥ ४
दुर्दमस्तस्य पुत्रस्तु कनकस्तस्य नन्दनः ।
पितृदेवान् समाराध्य श्राद्धैर्बहुविधैर्नृपः ॥ ५
पितृलोकं च संप्राप ब्रह्माद्यैर्मानितोऽभवत् ।
कृतवीर्यस्तस्य पुत्रो माहिष्मत्यां नृपोऽभवत् ॥ ६
चक्रवर्ती बभूवायं पुत्रहीनो वनं ययौ ।
निराहारः स राजेन्द्रस्तताप परमं तपः ॥ ७
कनकः पितृलोकस्थः पुत्रस्य सुतहेतवे ।
संकष्टव्रतमाद्यं तु श्रुत्वा ब्रह्ममुखात् स्वयम् ॥ ८
विलिख्य पुस्तकं तत्तु पुत्राय प्रददौ तदा ।
कृतवीर्यः पुस्तकं तु दृष्ट्वा हर्षयुतोऽभवत् ॥ ९
व्रतराजं चकारायं कार्तवीर्यार्जुनं सुतम् ।
संप्राप कार्तवीर्यस्तु कृतवीर्यसुतो बली ॥ १०
सहस्रबाहुतां लब्धुं दत्तात्रेयस्य शासनात् ।
श्रीदक्षिणकुटीद्वीपं संप्राप च महामनाः ॥ ११
वसिष्ठेशं महालिङ्गं पूजयन् द्वादशाब्दकम् ।
तपश्चक्रे महाघोरं निराहारो जितेन्द्रियः ॥ १२
आविरासील्लिङ्गमध्याद्वासिष्ठेशो महेश्वरः ।
उमास्कन्दगणेशाद्यैर्नन्द्याद्यैश्चोपसेवितः ॥ १३
नत्वा स्तुत्वा महादेवं प्रार्थयामास भूपतिः ।

कार्तवीर्यः—

सप्तद्वीपस्थितान् सर्वान् रणे जेतुं महेश्वर ॥ १४
सहस्रबाहुतां देहि नागलक्षबलं तथा ।
सप्तद्वीपेषु गन्तुं च रथमेकमनुत्तमम् ॥ १५
द्विजदेवेषु मे भक्तिं मतिं धर्मे सदैव च ।
स्वेच्छारूपधृतौ शक्तिं भक्तिं ते पादपङ्कजे ॥ १६
अतुलां देहि मे शंभो जयं युद्धे तु सर्वदा ।

देहि देव नमस्तुभ्यं कृपया परमेश्वर ॥ १७
इति तं प्रार्थयामास कार्तवीर्यो महेश्वरम् ।
शिवस्तुष्टस्तथा दत्त्वा सर्वं तत्प्रार्थितं मुदा ॥ १८
उवाच तं प्रसन्नात्मा सत्त्वं त्यक्त्वा च गर्वतः ।
करिष्यसि ह्यधर्मं त्वं बाहुच्छेदस्ततो भवेत् ॥ १९
आकल्पान्तं स्वर्गवासो भवेदेव न संशयः ।
उपासनं तव जनाः कुर्युर्नष्टसुसिद्धये ॥ २०
एवं तस्मै वरान् दत्त्वा वसिष्ठेशस्तिरोऽभवत् ।
कृतवीर्यसुतो धीमान् सहस्रभुजमण्डितः ॥ २१
शिवदत्तरथं दिव्यं समारुह्य पुरं ययौ ।
रथेन तेन द्वीपेषु सप्तसु प्रवरान् नृपान् ॥ २२
राक्षसान् दानवांश्चापि जित्वा तु रणमण्डले ।
सप्तद्वीपाधिपोऽभूच्च लक्षनागबलान्वितः ॥ २३
सर्वदा द्विभुजश्चायं नारीणामपि सुन्दरः ।
तस्य बाहुसहस्रं तु युद्धकाले प्रजायते ॥ २४
सर्वे यज्ञा महाबाहोस्तस्यासन् भूरिदक्षिणाः ।
सर्वे काञ्चनयूपाश्च सर्वे काञ्चनवेदयः ॥ २५
सर्वैर्देवैर्योगिवर विमानस्थैरलंकृताः ।
तस्य यज्ञे जगौ गाथां गन्धर्वो नारदस्तथा ॥ २६
न नूनं कार्तवीर्यस्य गतिं यास्यन्ति पार्थिवाः ।
यज्ञैर्दानैस्तपोभिर्वा विक्रमेण श्रुतेन च ॥ २७
द्वीपेषु सप्तसु स वै खड्गी चर्मी शरासनी ।
रथी द्वीपाननुचरन् नृभिर्योगीव दृश्यते ॥ २८
अनष्टद्रव्यता चैव न शोको न च विभ्रमः ।
प्रभावेण महाराज्ञः प्रजा धर्मेण रक्षतः ॥ २९
पञ्चाशीतिसहस्राणि वर्षाणां वै नराधिपः ।
चक्रवर्ती स सम्राट् सन् शुशुभे सर्वरत्नभाक् ॥ ३०
स एव यज्ञपालोऽभूत् क्षेत्रपालः स एव च ।
स एव वृष्ट्या पर्जन्यो योगित्वादर्जुनोऽभवत् ॥ ३१
स वै बाहुसहस्रेण ज्याघातकठिनत्वचा ।

भाति रश्मिसहस्रेण शरदीव दिवाकरः ॥ ३२
स हि नागान् मनुष्येषु माहिष्मत्यां महाद्युतिः ।
कार्कोटकसुतान् जित्वा पुर्यां तस्यां न्यवेशयत् ॥ ३३
स वै वेगं समुद्रस्य प्रावृट्कालेऽम्बुजेक्षणः ।
क्रीडन्निव भुजोद्भिन्नं प्रतिस्रोतश्चकार ह ॥ ३४
लङ्घिता क्रीडिता तेन फेनस्रग्दाममालिनी ।
चलदूर्मिसहस्रेण शङ्किताभ्येति नर्मदा ॥ ३५
तस्य बाहुसहस्रेण क्षुभ्यमाणे महोदधौ ।
भयान्निलीना निश्चेष्टाः पातालस्था महासुराः ॥ ३६
चूर्णीकृतमहावीचिं चलन्मीनमहातिमिम् ।
मारुताविद्धफेनौघमावर्तक्षोभदुःसहम् ॥ ३७
प्रावर्तयत्तदा राजा सहस्रेण च बाहुना ।
देवासुरसमाक्षिप्तः क्षीरोदमिव मन्दरः ॥ ३८
मन्दरक्षोभचकिता अमृतोद्भवशङ्किताः ।
सहसोत्पतिता भीता भीमं दृष्ट्वा नृपोत्तमम् ॥ ३९
नता निश्चलमूर्धानो बभूवुस्ते महोरगाः ।
सायाह्ने कदलीखण्डे कम्पितास्तस्य वायुना ॥ ४०
स वै बद्ध्वा धनुर्ज्याभिरुत्सिक्तं पञ्चभिः शरैः ।
लङ्केशं मोहयित्वा तु सबलं रावणं बलात् ॥ ४१
निर्जित्यैव समानीय माहिष्मत्यां बबन्ध तम् ।
श्रुत्वा तु बद्धं पौलस्त्यं रावणं त्वर्जुनेन च ॥ ४२
ततो गत्वा पुलस्त्यस्तमर्जुनं ददृशे स्वयम् ।
मुमोच रक्षः पौलस्त्यं पुलस्त्येनानुयाचितः ॥ ४३
यस्य बाहुसहस्रस्य बभूव ज्यातलस्वनः ।
युगान्ते त्वम्बुदस्येव स्फुटतो ह्यशनेरिव ॥ ४४
अहो बत मृधे वीर्यं भार्गवस्य यदच्छिनत् ।
राज्ञो बाहुसहस्रं तु हैमं तालवनं यथा ॥ ४५
तृषितेन कदाचित् स भिक्षितश्चित्रभानुना ।
स भिक्षामददाद्वीरः सप्त द्वीपान् विभावसोः ॥ ४६
पुराणि ग्रामघोषांश्च विषयांश्चैव सर्वशः ।

जज्वाल तस्य सर्वाणि चित्रभानुर्दिधक्षया ॥ ४७
स तस्य पुरुषेन्द्रस्य प्रभावेण महात्मनः ।
ददाह कार्तवीर्यस्य शैलांश्चैव वनानि च ॥ ४८
स शून्यमाश्रमं रम्यं वरुणस्यात्मजस्य वै ।
ददाह वनवद्वीतश्चित्रभानुः सहैहयः ॥ ४९
यं लेभे वरुणः पुत्रं पुरा भास्वन्तमुत्तमम् ।
वसिष्ठं नाम स मुनिः ख्यात आपव इत्युत ॥ ५०
अथापवस्तु तं क्रोधाच्छप्तवानर्जुनं विभुः ।
यस्मान्न वर्जितमिदं वनं ते मम हैहय ॥ ५१
तस्मात्ते दुष्करं कर्म कृतमन्यो हनिष्यति ।
रामो नाम महाबाहुर्जामदग्न्यः प्रतापवान् ॥ ५२
छित्त्वा बाहुसहस्रं ते प्रमथ्य तरसा बली ।
तपस्वी ब्राह्मणश्च त्वां हनिष्यति स भार्गवः ॥ ५३
अनष्टद्रव्यता यस्य बभूव मुनिसत्तम ।
प्रभावेण नरेन्द्रस्य प्रजा धर्मेण रक्षतः ॥ ५४
रामात्ततोऽस्य मृत्युर्वै तस्य शापान्मुनेरभूत् ।
तस्य पुत्रशतस्यासन् पञ्च शेषा महात्मनः ॥ ५५
अन्ये हता महायुद्धे जामदग्न्येन धीमता ।
एवंप्रभावसंयुक्तः कार्तवीर्यो महाबलः ॥ ५६
निहतो भार्गवेणैव दिव्यदेहसमन्वितः ।
स्थितो धर्मस्य सदसि तथोपास्यो द्विजादिभिः ॥ ५७

॥ इति श्रीदक्षिणकुटीद्वीपक्षेत्रमाहात्म्ये कार्तवीर्यप्रभावो नाम त्रयोदशोऽध्यायः ॥

## ॥ अथ चतुर्दशोऽध्यायः [ सौरभेयीचरितम् ] ॥

सनत्कुमारः—

एतादृशः प्रभावाढ्यः कार्तवीर्यो नृपोत्तमः ।
जामदग्न्येन रामेण किमर्थं ब्राह्मणेन च ॥ १
हतो युद्धे महावीर्यः शङ्करस्य वरान्वितः ।
सप्तद्वीपाधिपः श्रीमान् किमर्थं कारणं वद ॥ २

कथं जातो भार्गवस्तु कस्य पुत्रः प्रतापवन् ।
चरित्रं जामदग्न्यस्य कार्तवीर्यवधात्मकम् ॥ ३
कृपया ब्रूहि मे स्कन्द सर्वतत्त्वविशारद ।

स्कन्द उवाच—

ब्रह्मणस्तनयो योगी भृगुर्नाम प्रजापतिः ॥ ४
च्यवनस्तस्य पुत्रस्तु ऋचीकस्तस्य पुत्रकः ।
जमदग्निस्तस्य पुत्रो महेशांशसमुद्भवः ॥ ५
मनसा सृष्टिसंहारौ निग्रहानुग्रहावपि ।
यः करोति त्रिकालज्ञो मुनिः सुरभिपुत्रिकाम् ॥ ६
कामधेनुवरं लब्धुं तपस्तप्तुं मनो दधे ।
उपाय कार्यसिद्ध्यर्थं पृष्टवान् पितरं मुनिम् ॥ ७
तमाह तनयं प्रीत्या ऋचीको ब्रह्मवित्तमः ।

ऋचीकः—

सर्वकामप्रदा धेनुः सुरभिश्चेति विश्रुता ॥ ८
ब्रह्मलोकस्थितान् सर्वान् सा पोषयति सर्वदा ।
मार्तण्डात्तस्य पुत्र्यौ च नन्दिनी कामदायिनी ॥ ९
कामदात्री कमलिनी वृषभो नन्दिकेश्वरः ।
सञ्जाता मातृवच्छक्तिं प्राप्तुं च पितृचोदिते ॥ १०
श्रीदक्षिणकुटीद्वीपं तपस्तप्तुं च जग्मतुः ।
तत्र गत्वा महादेव स्वयंभूतेश्वरं शिवम् ॥ ११
अभिषिच्य तयोः क्षीरैर्निवेद्य क्षीरमेव च ।
पञ्चाक्षरमनुं जप्त्वा चक्रतुश्च तपो महत् ॥ १२
ततो वर्षसहस्रान्ते स्वयंभूतेश्वरः शिवः ।
आविर्बभूव लिङ्गाच्च परशक्त्या समन्वितः ॥ १३
नत्वा ते परमेशानं प्रार्थयामासतुर्मुदा ।

ते ऊचतुः—

आवयोर्जननी धेनुर्ब्रह्मपुत्री यशस्विनी ॥ १४
कण्ठाधो धेनुरूपा सा मुखे शक्तिस्वरूपिणी ।
मनसा सृष्टिमतुलां संहर्तुं शक्तिसंयुता ॥ १५
दिव्यान्नभोज्यपूर्वाणां दाने शक्तिसमन्विता ।
ब्रह्मलोकस्थितान् सर्वान् भोजयत्येव सान्वहम् ॥ १६

सर्वेष्वपि च लोकेषु गतियुक्ता निजेच्छया ।
व्योमगा ब्रह्मलोके तु पूजिता चैव तिष्ठति ॥ १७
आवयोरपि तां शक्तिं सर्वलोकेषु पूज्यताम् ।
मातृवच्चापि रूपं च देहि देव नमोऽस्तु ते ॥ १८
एवं तयोः प्रार्थनां तु श्रुत्वाह परमेश्वरः ।

शिवः—

युवाभ्यां प्रार्थितं दत्तं मातृवद्रूपमुत्तमम् ॥ १९
मातृवच्छक्तिसंयुक्ते शासनान्मे भविष्यथः ।
स्वर्गलोके निवासं च सर्वत्र व्योममार्गतः ॥ २०
गमने चापि शक्तिं च स्वर्गलोकनिवासिनाम् ।
दिव्यान्नभोज्यदाने च भूतलेऽपि निजेच्छया ॥ २१
भक्तानां दिव्यभोज्यादिदाने शक्तिसमन्विते ।
भविष्यथोऽथ सृष्ट्यां तु पालने हननेऽपि च ॥ २२
दिव्यसामर्थ्यसंयुक्ते दुष्टदानवपूर्वकैः ।
अजेये चापि दुर्धर्षे वरान्मम भविष्यथः ॥ २३

स्कन्दः—

पुनर्नत्वा महादेवं प्रार्थयामासतुश्च ते ।

ते ऊचतुः—

इदं क्षेत्रं स्वयंभूतं ख्यातिं धेनुपुरं त्विति ॥ २४
यातु त्वं वरदो धेनुपुरीशश्चेति नामवान् ।
भव ते चरणे भक्तिर्देवीपादेऽस्तु सर्वदा ॥ २५
तथास्त्विति वरं दत्त्वा परमेशस्तिरोऽभवत् ।
श्रीदक्षिणकुटीद्वीपं प्रोक्तं धेनुपुरं त्विति ॥ २६
शिवो धेनुपुरीशानः संस्तुतो मुनिपुङ्गवैः ।
कामधेनू सुसंपूज्य शम्भुं धेनुपुरीश्वरम् ॥ २७
स्वर्गलोकं जग्मतुश्च स्वर्गे देवेन्द्रपूर्वकैः ।
पूजिते स्वर्गलोकस्थान् भोज्यभक्ष्यादिभिः सदा ॥ २८
ते प्रीत्या पोषयन्त्यौ स्तो मित्रावरुणसंभवः ।
वसिष्ठः शङ्करं भक्त्या पूजयन् कुसुमादिभिः ॥ २९
स्थले तस्मिन् शताब्दं तु तपश्चक्रे सुदारुणम् ।
स्वयंभूतो वसिष्ठेशः प्रददौ दर्शनं तदा ॥ ३०

नत्वा स्तुत्वा महादेवं प्रार्थयामास योगिराट् ।

वसिष्ठः—

तव प्रसादाद्देवेश ब्रह्मज्ञानमनुत्तमम् ॥ ३१

ब्रह्मवित्सु वरिष्ठत्वं प्राप्तं ते वरदानतः ।

आकल्पकालं प्रारब्धदेहस्तिष्ठेत्तवाज्ञया ॥ ३२

अग्निहोत्रादिकर्माणि कार्याणीति मतिर्मम ।

अग्निहोत्रद्रव्यसिद्ध्यै मम देहस्य शङ्कर ॥ ३३

भार्यापुत्रमुखानां च पोषणाय महेश्वर ।

स्वर्गस्थां कामधेनुं मे देहि त्वं कृपया शिव ॥ ३४

तमुवाच वसिष्ठेशः स्वयंभूतेश्वरः शिवः ।

वसिष्ठेशः—

स्वर्गस्थानां पोषिणी या स्वर्गलोकनिवासिनी ॥ ३५

त्वदीयस्मरणादेव कामधेनुस्तु नन्दिनी ।

आगत्येष्टं पूरयेच्च स्वर्गं गच्छेत्तवाज्ञया ॥ ३६

एवं तस्मै वरं दत्त्वा समाहूय च नन्दिनीम् ।

वसिष्ठस्मरणादेव गत्वा तन्निकटं मुदा ॥ ३७

प्रार्थितं तेन देहि त्वं सर्वदा मम शासनात् ।

इत्युक्त्वा नन्दिनीं शम्भुरनुगृह्य मुनीश्वरम् ॥ ३८

लिङ्गमध्ये तिरोऽभूच्च कामधेन्वा तयान्वहम् ।

पोषितो ध्याननिरतः करोति च तपः सदा ॥ ३९

ऋचीकः—

अतो मे तनय त्वं तु वसिष्ठाश्रममुत्तमम् ।

श्रीदक्षिणकुटीद्वीपं गत्वा शम्भुं प्रतोषय ॥ ४०

शङ्करस्य प्रसादेन धेनुं कमलिनीं पराम् ।

प्राप्स्यसि त्वं गच्छ तत्र शिवा मार्गाश्च सन्तु ते ॥ ४१

स्कन्दः—

एवं पितुः शासनेन जमदग्निर्मुनीश्वरः ।

श्रीदक्षिणकुटीद्वीपं गत्वा शम्भुं महेश्वरम् ॥ ४२

अतोषयत् पशुपतिं स्वयंभूतेश्वरं प्रभुम् ।

दिव्यवर्षशतान्ते तु शम्भुः पशुपतीश्वरः ॥ ४३

आविरासीत् पुरस्तस्य जमदग्निर्मुनीश्वरः ।

नत्वा स्तुत्वा महादेवं प्रार्थयामास सादरम् ॥ ४४





जमदग्निः—

ममापि संश्रितानां च पोषणाय महेश्वर ।
देवलोकस्थितां धेनुं कामदां देहि शङ्कर ॥ ४५
उवाच तं प्रसन्नात्मा स्वयंभूतेश्वरः शिवः ।

शिव उवाच—

स्वर्गलोकनिवासानां पोषिणी कामदायिनी ॥ ४६
त्वदीयस्मरणादेव समागत्य त्वदीप्सितम् ।
पूरयित्वा पुनर्गच्छेच्छासनान्मे मुनीश्वर ॥ ४७
तव वश्या च सन्तिष्ठेद् भूतले मम शासनात् ।
इत्युक्त्वा तां कमलिनीं कामधेनुं सदाशिवः ॥ ४८
आहूय प्रावदत्तां तु वत्से त्वं मम शासनात् ।
जमदग्नेस्तु वश्या च तदीयस्मरणेन च ॥ ४९
गत्वा तन्निकटं तूर्णं तदभीष्टं प्रपूरय ।
इत्युक्त्वा स तिरोऽभूच्च धेनुः स्वर्गं ययौ मुदा ॥ ५०
जमदग्निः स्वाश्रमं च संप्राप भृशहर्षितः ।
सुरभेश्च सुपुत्र्यौ ते स्वर्गलोके सुसंस्थिते ॥ ५१
भूम्यामपि तु दृश्येते जमदग्निवसिष्ठयोः ।
जमदग्नी रेणुकां तु संप्राप्य गिरिजांशजाम् ॥ ५२
गृहस्थाश्रमगो भूत्वा तपोमार्गरतोऽभवत् ।
रेणुकायां मुनेस्तस्य रामनामा सुतोऽभवत् ॥ ५३
अतिसुन्दरगात्रोऽसौ साक्षान्मन्मथमन्मथः ।
कर्ता च पित्रोर्वाक्यस्य विख्यातबलपौरुषः ॥ ५४
देवद्विजगुरुप्राज्ञगोऽश्वानां पूजने रतः ।
वेदवेदाङ्गशास्त्राणां स्मृतीनामपि पाठकः ॥ ५५
वाक्ये बृहस्पतिसमः क्षमया पृथिवीसमः ।
गाम्भीर्येऽब्धिसमो यस्तु पित्रोर्वाक्यपरायणः ॥ ५६
पित्रोराज्ञां गृहीत्वा स नैमिशारण्यमाययौ ।
अनेकविद्याभ्यसने मतिं कृत्वा परां स्थिराम् ॥ ५७

॥ इति श्रीदक्षिणकुटीद्वीपक्षेत्रमाहात्म्ये सौरभेयीचरितं नाम चतुर्दशोऽध्यायः ॥

## ॥ अथ पञ्चदशोऽध्यायः [ कार्तवीर्यातिथ्यम् ] ॥

स्कन्दः—

तस्मिन् गते नृपवरः कार्तवीर्यो महाबलः ।
यस्य प्रतापादभवद्वश्यं भूमण्डलं सदा ॥ १
यस्मिन् लक्ष्मीः स्थिरा विष्णोरंशभूतेऽखिलार्थदे ।
आजौ पञ्चशतं बाणान् सृजते रिपुघातकान् ॥ २
इन्द्रादिवृन्दसेव्योऽसौ विख्यातबलपौरुषः ।
असंख्याता गजा यस्य रथा वाजिपदातयः ॥ ३
निर्गमे यस्य सैन्यानि च्छादयन्ति महीतलम् ।
वर्षाकाले यथा मेघा धाराभिर्व्योममण्डलम् ॥ ४
यस्य कम्बुस्वनं श्रुत्वा द्विषो यान्ति दिशो दश ।
यथा सिंहरवं श्रुत्वा मत्तमातङ्गकोटयः ॥ ५
यदा तालीपञ्चशतं स्वेच्छया कुरुते नृपः ।
तदा सनादं ब्रह्माण्डं कम्पते मुनिसत्तम ॥ ६
असौ यदृच्छयायातश्चतुरङ्गबलान्वितः ।
नीलवस्त्रधरो नीलच्छत्रस्तादृशसैनिकः ॥ ७
वनानि सरितो दुर्गान् पर्वतांश्च विलोडयन् ।
नानामृगगणान् वीक्ष्य विनिघ्नन्नपि कांश्चन ॥ ८
ततः सह्याद्रिशिखरेऽपश्यदाश्रममुत्तमम् ।
यथा कैलासशिखरे गिरिशालयमुत्तमम् ॥ ९
अपृच्छत् सेवकान् राजा कस्येदं स्थलमुत्तमम् ।

भृत्य उवाच—

जमदग्निरिति ख्यातः साक्षात् सूर्य इवापरः ॥ १०
मुनिरास्ते महाभागः शापानुग्रहकारकः ।
यस्य दर्शनतः पापकोटयो यान्ति संक्षयम् ॥ ११
इच्छा चेत्तत्र गन्तव्यं दर्शनं ते भविष्यति ।

स्कन्दः—

इति तद्वचनं श्रुत्वा गमनायोद्यतो नृपः ॥ १२
न्यषेधयद्बलं सर्वं श्रेष्ठानादाय तत्क्षणात् ।
ययौ तं मुनिशार्दूलं जमदग्निं तपोनिधिम् ॥ १३
ददर्श तं कुशासीनं ज्वलन्तमिव पावकम् ।

प्रणनाम स साष्टाङ्गं ते सर्वे सहयायिनः ॥ १४
नानाविशालशालासु कुञ्जवृक्षावलीषु च ।
निषेदुः सैनिकास्ते तु राजा तस्थौ मुनेः पुरः ॥ १५
आसने मुनिनादिष्टे चतुर्भिः परिवारितः ।
निषसाद तदा राजा कृतवीर्यसुतो बली ॥ १६
अपूजयत तान् सर्वानर्घ्यपाद्यासनादिभिः ।
स मुनिः प्रददौ गाश्च शिष्यैः सर्वानपूजयत् ॥ १७
नानासरोवरजले निर्मले चारुशीतले ।
अमज्जन्त तदा सर्वे सैनिका मृगयाजिताः ॥ १८
शृण्वन् वेदनिनादांश्च शास्त्रशब्दांश्च पुष्कलान् ।
अभितो वादशब्दांश्च तच्छिष्यैः समुदीरितान् ॥ १९
अब्रवीन्मुनिमुख्यं तं राजा राजीवलोचनः ।
अद्य मे पितरौ धन्यौ जन्म ज्ञानं तथा तपः ॥ २०
पुण्यवृक्षोऽद्य फलितो यज्जातं तव दर्शनम् ।
अद्य मे सम्पदो धन्याः कुलं धन्यं यशोऽपि मे ॥ २१
परब्रह्मेति यत् प्रोक्तं तदेव त्वं न संशयः ।
आतिथ्यं तव दृष्ट्वैवं परितुष्टं मनो मम ॥ २२
इति श्रुत्वा वचो राज्ञः स्मयमानः प्रसन्नधीः ।
कोऽसि कस्यासि किं नाम किं कार्यं तव वर्तते ॥ २३
इति तं परिपप्रच्छ जानन्नपि मुनिस्तदा ।

राजोवाच—

राज्ञां स्वकार्यकर्तॄणां भवादृशनिरीक्षणात् ॥ २४
नान्यत् प्रयोजनमुरु श्रेयसाजनि तत् स्फुटम् ।
कृतवीर्यसुतोऽहं च कार्तवीर्य इति श्रुतः ॥ २५
अनुज्ञातो गमिष्यामि ततोऽहं नगरं प्रति ।

मुनिरुवाच—

मयाश्रावि महाकीर्तिस्तव राजन्यसत्तम ॥ २६
आसीत्त्वद्दर्शनाकाङ्क्षा जाता पुण्येन सत्फला ।
देह आत्मा तपो ज्ञानमाश्रमो मम साम्प्रतम् ॥ २७
अभूदागमनाद्राजन् सार्थकाः सर्वसम्पदः ।

अकृत्वा भोजनं किञ्चित् कथं त्वं गन्तुमर्हसि ॥ २८
मम श्लाघा भवेल्लोके नूनं किं तव विद्यते ।
किञ्चिद्भुक्त्वा व्रज विभो सनाथं कुरु मां प्रभो ॥ २९

राजोवाच—

सत्यं भोजनकालोऽस्ति भोक्तव्यं च तवाज्ञया ।
अन्नाभावे श्रोत्रियाणां जलं याच्य पिबेदपि ॥ ३०
तथाप्येतान् विहायाहं सैनिकान् गणनातिगान् ।
जलं पातुं न शक्नोमि कथं भोक्तुं समुत्सहे ॥ ३१
जानेऽहं मनसा ब्रह्मन्न शक्तिः सर्वभोजने ।
भवद्दर्शनमात्रेण कृतकृत्यो व्रजेऽधुना ॥ ३२

मुनिरुवाच—

चिन्तां मा कुरु राजेन्द्र भोजयिष्ये ससैनिकम् ।
चतुर्विधेन चान्नेन किमसाध्यं तपस्विनाम् ॥ ३३
गृहे ते वाहिनी या स्यात्तामप्याकारय प्रभो ।
क्षणं विश्राम्यतां तीरे नद्याश्चारुतरे शुभे ॥ ३४
यावत्सिद्धं भवेदन्नं पश्चाद्द्रक्ष्यसि कौतुकम् ।

स्कन्दः—

अन्तः स विस्मयाविष्टो जगाम कृतवीर्यजः ॥ ३५
वाक्यमाकर्ण्य तु मुनेर्नदीतीरं सुशोभनम् ।
मुनिः पत्नीं समाहूय वृत्तान्तं तं जगाद ताम् ॥ ३६
आहूय कामधेनुं तौ पुपूजाते क्षणेन ताम् ।
प्रार्थयामासतुरुभौ लज्जां नौ रक्ष धेनुके ॥ ३७
असंख्यातबलो राजा भोजनाय निमन्त्रितः ।
यथारुचि भवेत्तस्य ससैन्यस्य भुजिः शुभे ॥ ३८
तथा कुरु क्षणेन त्वं नो चेत् सत्यं लयं व्रजेत् ।
अकीर्तिश्च भवेल्लोके यथेच्छसि तथा कुरु ॥ ३९
एवं संप्रार्थिता ताभ्यां कामधेनुर्महापुरम् ।
निर्माय स्वप्रभावेण नानामन्दिरसुन्दरम् ॥ ४०
नानारत्नमयस्तम्भशोभिनानासभागृहम् ।
नानापुष्पलताचारुवाटिकाराममण्डितम् ॥ ४१

नानाध्वजपताकाढ्यं नानावादित्रनिःस्वनम् ।
अष्टापदानां भाण्डानां नानापङ्क्तिविराजितम् ॥ ४२
चतुर्विधान्नसंपन्नं नानाभाजनपङ्क्तिमत् ।
महातोरणशोभाढ्यं परिखावलयाङ्कितम् ॥ ४३
अनेकदासदासीभिर्विलसच्चारुवेदिकम् ।
निवारयन्ति लोकांश्च तत्र तत्र स्थिता नराः ॥ ४४
पुरो गन्तु न चाज्ञास्ति जमदग्निमुनेरिति ।
परिविष्टेषु पात्रेषु संख्यातीतेषु सर्वतः ॥ ४५
दीपप्रभाभासुरेषु नानाव्यञ्जनशालिषु ।
सूपपायसपक्वान्नपञ्चामृतयुतेषु च ॥ ४६
सुखाद्यलेह्यचोष्यादिपेयपङ्क्तिविराजिषु ।
सामुद्रपक्वनिम्बाम्रामृतबिल्वादिशालिषु ॥ ४७
चन्द्रैलाहिङ्गुमारीचकथिकापात्रशालिषु ।
सिद्धेषु पात्रेषु मुनिस्तमद्या-
वाकारयच्छिष्यगणं तदानीम् ।
श्रीकामधेनोः परिपूर्णतोषा-
द्भोक्तुं ससैन्यं कृतवीर्यपुत्रम् ॥ ४८
ततो मुनिः शिष्यगणमुवाच त्वरया व्रज ।
आकारय महाराजं नदीतीरनिवासिनम् ॥ ४९
ते शिष्यास्तं नृपं गत्वा गृह्य तत्प्रणतिं पुरा ।
दत्त्वाशीर्वचनं तस्मै मुनेराज्ञां तथाब्रुवन् ॥ ५०
चल राजन्नवहितो भोजनाय ससैनिकः ।
पात्राणि परिविष्टानि संख्यातीतानि षड्रसैः ॥ ५१

स्कन्दः—

तत उत्थाय राजासौ तान् समाहूय सैनिकान् ।
सुस्नातः सर्वसैन्येन कार्तवीर्यो नृपो ययौ ॥ ५२
मुनिवेश्म ततोऽपश्यन्न दृष्टं च न वै श्रुतम् ।
एतादृशं त्रिलोकेषु गृहतोरणमाप सः ॥ ५३
स निषिद्धो वेत्रधरैर्मुनिसंकेतकामुकैः ।
ते निषिद्धाः शिष्यगणैस्ततोऽगाद्भोजनालयम् ॥ ५४

स्थित्वा मध्ये पश्यति स्म राजासौ संपदं मुनेः ।
अमन्यत तदा स्वान्ते नेदृशी श्रीर्हरौ हरे ॥ ५५
इन्द्रे दिक्पालके स्रष्टर्यपि ब्रह्मणि नेदृशी ।
ततो मुनिः पुरो भूत्वा प्रतिपात्रं न्यवेशयत् ॥ ५६
राजानुमतिमाज्ञाय पङ्क्तौ पङ्क्तौ स सैनिकान् ।
दापयामास पात्राणि तान् बहिर्भोजिनः प्रति ॥ ५७
उपविष्टेषु सर्वेषु स उपावेशयन्नृपम् ।
तदा बुभुजिरे वाद्ये वादिते सर्व एव हि ॥ ५८
अदृष्टपूर्वाण्यन्नानि स्वादुमूलफलानि च ।
परस्परं च पप्रच्छुः किमिदं किमिदं न्विति ॥ ५९
आश्चर्यं मेनिरे सर्वे यामेनेत्थं कथं कृतम् ।
यथेष्टं भुञ्जते सर्वे तृप्ताश्चान्नानि तत्यजुः ॥ ६०
ते प्रक्षालनपात्राणि प्रतिपात्रं न्यवेदयन् ।
मुनिशिष्या जलं चापि शलाका अपि चानयन् ॥ ६१
गजाश्ववृषबृन्देभ्यः शिष्याः शेषान्नमार्पयन् ।
ततोऽन्यस्मिन् गृहे सर्वे विस्तीर्णगृहसंस्तरे ॥ ६२
इक्षुद्राक्षाम्रपनसदाडिमादिफलोत्तमान् ।
एलालवङ्गकर्पूरचूर्णखादिरपूगकान् ॥ ६३
जगृहुर्मुनिदत्तांस्ते नागवल्लीदलैर्युतान् ।
ततो ददावलंकारान् वासांसि च मुदा मुनिः ॥ ६४
तेभ्यो यथार्हं सर्वेभ्यो राज्ञेऽनर्घतराणि च ।

मुनिरुवाच—

किं मया भोजनं देयं मुनिना वन्यवृत्तिना ॥ ६५
अवाप्तसर्वकामाय राज्ञे ते विष्णुरूपिणे ।
यशोऽकारि त्रिलोके मे त्वया मद्वाक्यकारिणा ॥ ६६
जमदग्नेर्गृहे राज्ञा ससैन्येन भुजिः कृता ।
अतिपुण्यवतो लोके साधुशब्दः प्रयुज्यते ॥ ६७
महान् क्षुद्रस्य वाक्यं चेत् कुरुते सोऽपि साधुताम् ।
प्राप्नोति सर्वलोकेषु कीर्तिं स्फीतां समुत्कटाम् ॥ ६८
मद्वाक्यकरणात्तेऽपि दूरेऽरिष्टं गतं महत् ।

स्कन्दः—

इति वाणीं समाकर्ण्य जमदग्निसमीरिताम् ॥ ६९

पप्रच्छ राजा तं तत्र विस्मयाविष्टमानसः ।

राजोवाच—

नादर्शि प्रथमं किञ्चिदिदं किं मायया कृतम् ॥ ७०

तपःप्रभावाद्वाकारि सत्यं मे वद सुव्रत ।

मुनिरुवाच—

अनृतं नोक्तपूर्वं मे परिहासेऽपि वा नृप ॥ ७१

अतः सत्यं ब्रवीमि त्वां कामधेन्वाखिलं कृतम् ।

॥ इति श्रीदक्षिणकुटीद्वीपक्षेत्रमाहात्म्ये कार्तवीर्यातिथ्यं नाम पञ्चदशोऽध्यायः ॥

## ॥ अथ षोडशोऽध्यायः [ कार्तवीर्यकमलिनीयुद्धम् ] ॥

स्कन्दः—

कुमतिस्तस्य भवति यस्य दैवमदक्षिणम् ।

अनिष्टं बलवद्भाति दुष्टग्रहकृतं मुने ॥ १

आपवस्य मुनीन्द्रस्य शापेन ब्रह्मवेदिनः ।

कार्तवीर्यस्य राजर्षेर्दुर्बुद्धिः संबभूव च ॥ २

भुक्त्वा तृप्तोऽपि राजासौ सम्यक् सबलवाहनः ।

आदाने कामधेनोः स मतिं कृत्वाब्रवीदिदम् ॥ ३

राजोवाच-

मुनीनां शान्तचित्तानां कन्दमूलफलाशिनाम् ।

मनसा सृष्टिसंहारकर्तॄणामस्पृहावताम् ॥ ४

जितेन्द्रियाणां विज्ञानां नेक्षे धेन्वा प्रयोजनम् ।

वन्यमारुतभक्ष्याणां मोक्षसाधनकारिणाम् ॥ ५

वेदाभ्यसनशीलानां सम्पदा किं प्रयोजनम् ।

शास्त्रपाठनशीलानां धर्मशास्त्रार्थवेदिनाम् ॥ ६

योगाभ्यासरतानां किं कामधेन्वा प्रयोजनम् ।
कार्याय महते स्यात्तु महद्वस्तु महद्गतम् ॥ ७
अरण्यवासिने तुभ्यं महद्रत्नं न चोचितम् ।
तस्माद्देया कामधेनुर्मम ब्रह्मन् मुदा त्वया ॥ ८
मयि स्थिता त्वैवास्ति चेतस्येवं प्रधार्यताम् ।
मर्यादा रक्ष्यतां ब्रह्मन्नुक्तमेवं पुरस्तव ॥ ९
नो चेद्राज्ञां किमग्राह्यं लोकेषु बलशालिनाम् ।
स्वराष्ट्रे परराष्ट्रे वा चतुरङ्गबलैः सह ॥ १०

स्कन्दः—

श्रुत्वैवं वचनं तस्य कार्तवीर्यस्य दुर्मतेः ।
प्रतिजज्वाल रोषेण जमदग्निर्महामुनिः ॥ ११
सर्पिषा बहुलेनेव जातवेदा यथा द्विजः ।
उवाच रक्तनयनः शिक्षयन्निव भूमिपम् ॥ १२

मुनिरुवाच—

साधु शुद्धो महान् राजा प्रार्थितो भोजनाय हि ।
कौटिल्यं तव न ज्ञातं बकस्येव हृदि स्थितम् ॥ १३
यथा वा कोकिलाः काकबालं पुष्णन्ति मायया ।
अन्ते तत्काकभावेन भक्ष्याभक्ष्यरतिं व्रजेत् ॥ १४
अहमेवाभवं भ्रान्तो य इमां राजमित्रताम् ।
न दृष्टां न श्रुतां प्राप्तो नानुभूतां च केनचित् ॥ १५
उपकारस्त्वयारम्भि साधुवृत्तानुसारिणा ।
आत्मघातं पुरस्कृत्य कामधेनुं त्वमिच्छसि ॥ १६
भ्रान्तोऽसि नृप सत्यं त्वमप्राप्यं योऽभिवाञ्छसि ।
त्रैलोक्यनाशजं पापं तव मूर्ध्नि पतिष्यति ॥ १७

स्कन्दः—

इति वाक्शरविद्धोऽसौ प्रलयानलसन्निभः ।
राजा बभूव रोषेण मुखादनलमुद्वमन् ॥ १८
उवाच परमक्रुद्धो जमदग्निं मुनिं तदा ।

राजोवाच—

न मया दुष्टवचनं कस्यापि श्रूयते शठ ॥ १९
किं करोमि द्विजोऽसि त्वमिति क्षान्तं वचः कटु ।

स्कन्दः—

तत उत्थाय राजासौ दूतानाज्ञापयद्द्रुतम् ॥ २०
मुक्त्वा कीलात् कामधेनुं शीघ्रमायान्तु मेऽन्तिकम् ।
आवेष्टयंस्तदा दूताः कामधेनुं तदाज्ञया ॥ २१
फूत्कारेणैव तस्यास्ते त्यक्त्वा प्राणान् दिवं ययुः ।
अन्यान् क्रोधानलेनासौ राजदूतान् ददाह च ॥ २२
श्वासमारुतवेगेन व्योम्नि वीराः परेऽभ्रमन् ।
आच्छाद्य मण्डलं भानोर्न प्राज्ञायत किञ्चन ॥ २३
दिशः सतिमिरा जाता व्योमापि च न भासते ।
धराकम्पः समभवद्वृक्षाः पेतुः प्रकम्पिताः ॥ २४
सैनिकाश्च ततो भीता यान्ति सर्वे दिशो दश ।
केनचित्ताडिता सा गौः कशाघातेन दूरतः ॥ २५
उड्डीयोड्डीय सा धेनुरधावत सैन्यमेव तत् ।
गजबृन्दं यथा सिंहो गरुत्मानुरगानिव ॥ २६
हाहाकारो महानासीद्वीराणां तत्र धावताम् ।
तानुवाच न भीः कार्या कार्तवीर्यो महाबलः ॥ २७
मयाध्माते मुदा शङ्खे भीता यास्यति मन्दिरम् ।
कामधेनुः क्रियच्चेति पश्यन्तु मम कौतुकम् ॥ २८
ततो दध्मौ महाशङ्खं त्रैलोक्यं पूरयन् रवैः ।
नबिभ्यतः कामधेनुं ताडयामासुरोजसा ॥ २९
यष्टिभिर्लोष्टनिचयैः सर्वे ते राजसेवकाः ।
यत्र यत्र प्रहारोऽस्याः शरीरे जायते ततः ॥ ३०
सन्नद्धाः सर्वशस्त्राढ्या नानावीरा विनिस्सृताः ।
शकाश्च बर्बराश्चासंस्तस्याः केशसमुद्भवाः ॥ ३१
पटच्चराः पाददेशादेवं सर्वे प्रजज्ञिरे ।
नानायवनजातीया नानावीरास्तथापरे ॥ ३२
वाजिवारणसङ्घाश्च रथिनो बलवत्तराः ।
ते चैव युयुधुस्तत्र कार्तवीर्यस्य सैनिकैः ॥ ३३
न्यपतन् कार्तवीर्यस्य सैनिकास्तैः प्रहारिताः ।
अपरे मीलितास्तत्र निशि वृक्षे पतङ्गवत् ॥ ३४

परस्पराघातहता निपेतुः शतशो नराः ।
भङ्क्त्वा शस्त्रैश्च शस्त्राणि मल्लयुद्धं प्रचक्रिरे ॥ ३५
एवं सुतुमुले जन्ये शस्त्रेषु निपतत्सु च ।
स्वीयो वा परकीयो वा न प्राज्ञायत किञ्चन ॥ ३६
रजसाच्छादिते सूर्ये जघ्नुरेवं परस्परम् ।
कोलाहलो महानासीद्धन्यतां हन्यतामिति ॥ ३७
हेषितैर्बृंहितैः क्ष्वेडैर्निबिडो रथनेमिभिः ।
मृदङ्गतालवेणूनां भेरीणां निनदैरपि ॥ ३८
एवं गव्यैः कार्तवीर्यै रथाश्वगजपत्तिभिः ।
अभवत् सुमहद्युद्धं भूतराक्षसभीतिदम् ॥ ३९
पक्षिजम्बूकसुखदं वीरपत्नीभयप्रदम् ।
केषांचिज्जानुनी भग्ने केषांचिच्च शिरांसि वै ॥ ४०
खड्गखेटकभल्लानां शराणां धनुषामपि ।
भग्नानां न च संख्यास्ति वीराणां रथिनामपि ॥ ४१
प्रपेतुः कार्तवीर्यस्य शेषा ये सैनिकास्तदा ।
पृष्ठलग्ना ययुर्गव्या हसन्तो न च जघ्निरे ॥ ४२
निनिन्दुर्मुनिना किं वोऽनिष्टं कृतमितीह ते ।
पूर्वदोषप्रसङ्गेन राज्ञो जाता सुदुर्मतिः ॥ ४३
एवं प्रभग्ने सैन्ये स उत्तस्थौ कृतवीर्यजः ।
हस्तयोर्जगृहे पञ्चशतं बाणान् धनूंषि च ॥ ४४
दत्त्वा भूमौ वामजानुं धनूंष्याकृष्य वेगवान् ।
चिक्षेप शरजालं स गव्ये सैन्ये महाभुजः ॥ ४५
फलहीनमभूत्तस्य शरजालं नृपस्य तत् ।
अनीतेश्चरितं यद्वद्वन्ध्यास्त्रीसुरतं यथा ॥ ४६
पुनः पुनर्जहौ बाणांस्तापतो राजसत्तमः ।
कामधेनोर्न चैकोऽपि वीरो भग्नोऽभवत्तदा ॥ ४७
शरजाले वृथा जाते सन्तप्तोऽभून्नृपस्तदा ।
क्व गतं मम सामर्थ्यमिति चिन्तातुरोऽभवत् ॥ ४८
व्याकुले न प्रहर्तव्यमिति सर्वे ययुर्दिवम् ।
कामधेनुर्मुदा युक्ता किं युद्धं लघुना सह ॥ ४९

गतायां कामधेनौ स कार्तवीर्यो मुनिं ययौ ।
रोषेणोवाच ते ब्रह्मन् कापट्यं विदितं मया ॥ ५०
न स विप्रोऽभिमन्तव्यो यस्य स्यात् कपटं हृदि ।
इत्येकं बाणमादाय ध्यानगं मीलिताक्षकम् ॥ ५१
देहभावं तु विस्मृत्य निश्चलेनैव चेतसा ।
व्याघ्रासने सन्निषण्णं विव्याध द्विजपुंगवम् ॥ ५२
लग्ने हृदि महाबाणे प्राणत्यागं चकार सः ।
रेणुका तं नृपं प्राह ब्रह्महत्या वृथा कृता ॥ ५३
स ऊचे रक्तनयनः क्रोधाविष्टो नृपस्तु ताम् ।
तूष्णीं तिष्ठ न चेद्धन्मि त्वामपीह मुनिप्रिये ॥ ५४
एकविंशतिबाणैस्तां दुष्टो राजावधीद्रुषा ।
सस्मार मनसा सापि जमदग्निं मुनिं तदा ॥ ५५
पश्चादुवाच नृपतिं दुष्ट चाण्डाल किं कृतम् ।
अपराधं विना कस्मादावां निहतवानसि ॥ ५६
तवापि भविता नाशो भुजानां नात्र संशयः ।
श्रुत्वेत्थं वचनं तस्यास्ततो यातो नृपस्तदा ॥ ५७
अल्पावशिष्टसैन्येन चिन्ताक्रान्तो ययौ पुरीम् ।
विनिन्दन् हृदि चात्मानं शोचंश्च मृतसैनिकान् ॥ ५८
निरुत्साहो निरुद्योगो विवेश निजमन्दिरम् ।

॥ इति श्रीदक्षिणकुटीद्वीपक्षेत्रमाहात्म्ये कार्तवीर्यकमलिनीयुद्धं नाम षोडशोऽध्यायः ॥

---

## ॥ अथ सप्तदशोऽध्यायः [ब्रह्महत्यापनोदकपशुतीर्थमहिमा] ॥

स्कन्दः—

ब्रह्मस्त्रीहत्ययात्यन्तं पीडितो नृपपुंगवः ।
सप्ततालप्रमाणाढ्यौ व्यादितास्यौ भयंकरौ ॥ १
कृष्णास्यौ भीमकायौ च दीर्घबाहुविराजितौ ।
करालजिह्वौ रक्ताक्षौ ब्रह्मस्त्रीहत्ययोत्थितौ ॥ २
नृपस्य पुरतः पश्चात् स्थित्वा मुसलबाहुकौ ।
भीषयामासतुस्तं च कार्तवीर्यं तु सर्वदा ॥ ३

स्थातुं गन्तुं च तौ द्रष्टुं शक्तिहीनो नृपाधमः ।
दत्ताश्रमं ततो गत्वा तमेव शरणं ययौ ॥ ४
जातं वृत्तं गुरौ दत्ते प्रावदद्भयसंयुतः ।
उवाच तं नृपं दत्तस्तर्जयन् कृतवीर्यजम् ॥ ५

दत्तः—

शिवस्य वरदानेन गर्वितस्त्वं नृपाधम ।
अग्नेः सहायकरणे चापवाहेन योगिना ॥ ६
शप्तस्त्वं तेन शापेन चैवं तु कृतवानसि ।
यस्मिन् क्षेत्रे त्वया लब्धं रथं बाहुसहस्रकैः ॥ ७
तस्मिन् क्षेत्रे महेशस्य सन्निधौ तीर्थमस्ति वै ।
तत्र गत्वा तीर्थवरे स्नानं कुरु शिवं स्मरन् ॥ ८
संपूजय महादेवं तपसा परितोषय ।
तीर्थस्नानप्रभावेण शिवस्य कृपयापि च ॥ ९
स्त्रीब्रह्महत्ये नश्येतां ततो राज्यं प्रपालय ।
रेणुका तु महासाध्वी सखी मे मुनिवल्लभा ॥ १०
तस्याः शापेन तत्पुत्रो रामो विष्णुर्महाबलः ।
छित्त्वा बाहून् पर्शुना ते शिरश्छेदं ततश्चरेत् ॥ ११
ततस्त्वं दिव्यदेहाढ्यो धर्मलोकमवाप्स्यसि ।
गच्छ तीर्थं महाबाहो शासनान्मे त्वरान्वितः ॥ १२

स्कन्दः—

एवं दत्तवचः श्रुत्वा पप्रच्छ कृतवीर्यजः ।

कार्तवीर्यः—

कदा कस्माच्च सञ्जातं किमर्थं तीर्थमुत्तमम् ॥ १३
एतन्मे ब्रूहि योगीन्द्र ब्रह्महत्याविमुक्तये ।

दत्त उवाच—

कल्पादौ भगवान् ब्रह्मा देवर्षीन् मानवानपि ॥ १४
मृगादीनपि सृष्ट्वा च वेदानागमपूर्वकान् ।
मुनिभ्यः प्रददौ प्रीत्या प्राह तान् मुनिसत्तमान् ॥ १५

ब्रह्मोवाच—

वेदोक्तयज्ञैर्विविधैर्देवानिन्द्रपुरोगमान् ।
ग्राम्यानारण्यकांश्चापि मृगान् कृत्वा पशून् मखे ॥ १६

यान् यान् यजध्वे ते देवा लोकानां वृष्टिपूर्वकैः ।
कुर्युः क्षेमं न सन्देह इत्याज्ञा पारमेश्वरी ॥ १७
यज्ञेन यष्ट्रा यज्ञे तु निहताः पशवोऽपि च ।
लभेरन् स्वर्गलोकं चाकल्पकालं न संशयः ॥ १८
शुश्रुवुर्ब्रह्मवाक्यं तन्मृगाः पक्षिगणा अपि ।
अतीव खेदसंयुक्ताः सञ्जाता भूतले स्थिताः ॥ १९
अजा अश्वास्तथा गावो बभूवुर्दुःखवर्जिताः ।
ततः परं महानश्वो बहुलक्षणसंयुतः ॥ २०
गौरेको बलवान् पुष्ट अजश्चैको मुदान्वितः ।
यज्ञार्हान् स्वात्मनः कर्तुं बभूवुश्चित्तसंयुताः ॥ २१
चरन्तस्ते वने घोरे दैवाद्दण्डककानने ।
श्रीदक्षिणकुटीद्वीपं गत्वा श्रमसमन्विताः ॥ २२
स्वयंभूतं महालिङ्गं ददृशुः पुण्यकर्मणा ।
तत्र स्थित्वा तपः कर्तुं प्रारभन्त यमान्विताः ॥ २३
जितेन्द्रिया निराहारा दूर्वापत्रादिभिः शिवम् ।
पूजयन्तो जपन्तश्च तस्थुर्ध्यानसमन्विताः ॥ २४
संपीडिताः सूर्यतापैः क्षुत्तृषापीडिताश्च ते ।
शिवस्य सन्निधौ स्थित्वा मूर्च्छां च परमां ययुः ॥ २५
अदृश्यः परमेशानस्तेषां पार्श्वे दयान्वितः ।
खात्वा भूमिं तु शूलेन सुतीक्ष्णेन स्वशीर्षगे ॥ २६
गङ्गाजले तु किञ्चिच्च प्राक्षिपच्च हिताय वै ।
गङ्गया पूरितं तत्र सरश्चैकं बभूव ह ॥ २७
शिवगङ्गेति तत्तीर्थं तदारभ्य श्रुतं त्वभूत् ।
शूलाग्रेण च खातत्वाच्छूलतीर्थमिति स्मृतम् ॥ २८
अजादयस्त्रयश्चैव प्रापुः संज्ञां शिवाज्ञया ।
जलपूर्णं सरो दृष्ट्वा शिवेनैव विनिर्मितम् ॥ २९
मत्वानन्दयुता भूत्वा स्नात्वा तीर्थे च ते त्रयः ।
तीर्थं पीत्वा पुनश्चक्रुस्तपो घोरं महत्तरम् ॥ ३०
ततो वर्षत्रये शंभुर्वृषभं वाहमास्थितः ।
प्रादुरासीत् पुरस्तेषां गौरीगणसमन्वितः ॥ ३१
उवाच तान् कृपादृष्ट्या संवीक्ष्य परमेश्वरः ।

वरान् वृणुत यूयं तु दास्ये सत्यं न संशयः ॥ ३२

अजादयः—

तव पादाम्बुजद्वन्द्वे देहि नो भक्तिमुत्तमाम् ।
श्रेष्ठांश्च कुरु नो देव यज्ञार्हेषु च जन्तुषु ॥ ३३
पशवश्चेति नो नाम सुरूढं भवतु प्रभो ।
सर्वेष्वपि च यज्ञेषु भोक्ता त्वं परमेश्वर ॥ ३४
अतस्त्वं वै पशुपतिरस्माभिः पशुभिस्त्विह ।
पूजितत्वात् पशुपतीश्वरनामयुतो भव ॥ ३५
अस्मद्धिताय यत्सृष्टं भवता तीर्थमुत्तमम् ।
पशुतीर्थमिति ख्यातिं सर्वपापविनाशनम ॥ ३६
प्राप्नोतु कृपया देव स्थलेऽस्मिन् सर्वकामदे ।
एवं तेषां प्रार्थनां वै श्रुत्वाह परमेश्वरः ॥ ३७

ईश्वर उवाच—

युष्माभिः पूजितत्वाच्च स्वयंभूतेश्वरो ह्यहम ।
संपत्स्ये वै पशुपतीश्वरनामा न संशयः ॥ ३८
पशुतीर्थमिति ख्यातं शूलतीर्थं भविष्यति ।
सर्वेऽपि प्राणिनो यज्ञे योज्याः कामानुसारतः ॥ ३९
पशवश्चेति युष्माकं रूढं नाम भविष्यति ।
वाजपेयादियज्ञेषु नित्येषु मम शासनात् ॥ ४०
संस्कारभूतयज्ञेषु पशुर्मेषो भविष्यति ।
सर्वश्रेष्ठे महायज्ञे ह्यश्वो भवतु वै पशुः ॥ ४१
महतां पूजने लोके गौरेव मधुपर्ककम् ।
भवत्वेवं क्वचिद्यज्ञे पशुर्भवतु वैकृते ॥ ४२
एवं दत्त्वा वरांस्तेभ्यो देवः पशुपतीश्वरः ।
तिरोऽभवल्लिङ्गमध्ये शासनेन शिवस्य च ॥ ४३
तेनाश्वेनाश्वमेधं च तत्र चक्रे सुरेश्वरः ।
मेषेण यज्ञं चक्रेऽत्र वसिष्ठो मुनिसत्तमः ॥ ४४
गवा यज्ञं तत्र चक्रे रन्तिदेवो नृपोत्तमः ।
यज्ञस्यैव प्रभावेण तेऽश्वगोमेषसंज्ञकाः ॥ ४५
पशवश्च स्वर्गभोगं भुक्त्वान्ते शंकरं ययुः ।
तदारभ्य महेशानस्तस्मिन् क्षेत्रे तु दण्डके ॥ ४६

देवः पशुपतीशः स्यात् पशुतीर्थमिति स्फुटम् ।
शूलतीर्थे तु कथितं तस्मात्त्वं कृतवीर्यज ॥ ४७
वसिष्ठस्याश्रमं गत्वा स्नात्वा च पशुतीर्थके ।
समाराधाय देवेशं शम्भुं पशुपतीश्वरम् ॥ ४८
ब्रह्महत्यादोषमुक्तो भविष्यसि न संशयः ।

स्कन्दः—

दत्तस्य शासनेनैवं वसिष्ठाश्रममुत्तमम् ॥ ४९
श्रीदक्षिणकुटीद्वीपं ब्रह्महत्यासमावृतः ।
गत्वा स्नात्वा पशोस्तीर्थे देवालयमुपागमत् ॥ ५०
तीर्थस्य तस्थतुः पूर्वे भागे घाताधिदेवते ।
शिवं पशुपतीशानं पुपूजे कृतवीर्यजः ॥ ५१
तत्क्षणाद्भस्मसाज्जाते नृपहत्याधिदेवते ।
सन्तुष्टः कार्तवीर्यस्तु स्वपुरं प्राप हृष्टधीः ॥ ५२
कृत्तिकासोमवारस्य प्रदोषे शुक्लपक्षके ।
कार्तवीर्यब्रह्महत्या विनष्टा स्नानवैभवात् ॥ ५३
कृत्तिकाकृष्णपक्षे तु प्रदोषे परमेश्वरः ।
पशूनां च वरं प्रादात्तस्माल्लोकेषु योगिप ॥ ५४
शनेः सोमस्य वारे च प्रदोषः श्रेष्ठ उच्यते ।

॥ इति श्रीदक्षिणकुटीद्वीपक्षेत्रमाहात्म्ये ब्रह्महत्यापनोदकपशुतीर्थमहिमा नाम सप्तदशोऽध्यायः ॥

## ॥ अथाष्टादशोऽध्यायः [भार्गवपरशुप्राप्तिः] ॥

सनत्कुमारः—

किं चक्रे रेणुका देवी गते तु कृतवीर्यजे ।

स्कन्दः—

रेणुका तु गते तस्मिन् शुशोच भृशविह्वला ॥ १
क गता मम पुत्रास्ते संहारेऽस्मिन्नुपस्थिते ।
मृते भर्तरि किं कुर्यां बाणजालसमावृता ॥ २
क गतोऽसौ महाक्रोधो रामो मे प्रियबालकः ।
तस्मिन्नष्टे मम प्राणा गमिष्यन्ति सुरालयम् ॥ ३

स्मृतमात्रस्तया रामो ययौ मातुस्तदान्तिकम् ।
बाणजालचितां तां च पितरं मृतमैक्षत ॥ ४
कार्तवीर्येण दुष्टेन दृढबाणहता हृदि ।
पपात मूर्च्छया भूमौ वातभग्न इव द्रुमः ॥ ५
पितरं मातरं दृष्ट्वा रुरोद भृशदुःखितः ।

राम उवाच—

अद्यान्धकारः सर्वत्र ह्यद्य शून्या दिशो दश ॥ ६
मेरुहीना यथा पृथ्वी शक्रहीनामरावती ।
नाश्रमः शोभते तद्वत् पित्रा हीनोऽयमद्य मे ॥ ७
त्रिलोकी गङ्गया हीना तद्वदाश्रममण्डली ।
गतं भयं तद्देवानां मुनयोऽद्य निरीश्वराः ॥ ८
यदासीत्तपसा चास्य किमयं वा प्रहीष्यते ।
एवं बहुविधाकारं चक्र आक्रन्दनं तु सः ॥ ९
अचेष्टत भृशं रामो मत्स्यो नीरं विना यथा ।
ततः पुनर्मातरं स रुदन्नेव समाययौ ॥ १०
निष्कासयामास शरानङ्के कृत्वा शिरोधराम् ।
चक्रन्द च पुना रामो मातृदुःखेन दुःखितः ॥ ११
त्रैलोक्यं भस्मसात् कर्तुं या क्षमा जननी मम ।
सा कथं पतिता भूमौ दुष्टबाणप्रपीडिता ॥ १२
न विस्मरति मां नित्यं क्षणं क्रीडागतं पुरा ।
त्यक्त्वा मां कथमद्य त्वं कुत्र वा गन्तुमुद्यता ॥ १३
ददासि मे पयो भूरि वस्त्राण्यन्नानि शोभने ।
फलमूलानि चारूणि यासि त्यक्त्वा कथं नु सा ॥ १४
मातापितृभ्यां हीनस्य धिङ्मे जीवितमद्य मे ।

स्कन्दः—

इति पुत्रवचः श्रुत्वा रेणुका भृशदुःखिता ॥ १५
प्रमृज्याश्रूणि पुत्रस्य जगाद भृशविह्वला ।
अहं ते निकटे स्थास्ये न शोकं कर्तुमर्हसि ॥ १६
शृणु वार्तां पुरा वृत्तां राजासौ कृतवीर्यजः ।
मध्याह्ने सह सैन्येन प्राप्त आश्रममण्डलम् ॥ १७

पित्रा ते मानितः सम्यग्भोजितो बलसंयुतः ।
कामधेनोः प्रसादेन भुक्त्वायाचत धेनुकाम् ॥ १८
तूष्णींभूते मुनौ कोपात् कामधेनुं मुमोच सः ।
स्पृष्टमात्रा च सा धेनुः ससर्ज बलमुत्कटम् ॥ १९
चतुरङ्गं ततो युद्धमभवद्राजसैनिकैः ।
पलायितेषु भग्नेषु राजा युद्धमथाकरोत् ॥ २०
स च पञ्चशतं बाणान् वारं वारमथासृजत् ।
सोऽपि भग्नो गृहं यातः कामधेनुर्दिवं गता ॥ २१
पुनरागत्य दुष्टोऽसौ बाणेनैकेन वक्षसि ।
जघान पितरं कोपादेकविंशतिसायकैः ॥ २२
अपराधं विना मां च ताडयित्वा गतः खलः ।
तस्मात्त्वयाद्य दुष्टस्य नाशः शीघ्रं विधीयताम् ॥ २३
एकविंशतिवारं च कुरु निःक्षत्त्रियां धराम् ।
एकविंशतिबाणा मे देहे तेन यतोऽर्पिताः ॥ २४
अन्यदेकं ब्रुवे पुत्र तत् कुरुष्व वचो मम ।
संस्कारं कुरु नौ तत्र यत्र कोऽपि न दाहितः ॥ २५
सर्ववेदिनमाकार्य दत्तात्रेयं मुनीश्वरम् ।
कुरु कर्मोत्तरं नौ त्वं त्रयोदशदिनावधि ॥ २६
तदैव गतिमाप्स्यावो नान्यो वक्तास्ति तादृशः ।
इत्युक्त्वा रेणुका देहं त्यक्त्वा धामाप दुर्गमाम् ॥ २७
रामस्तत्सर्वमकरोत्तयादिष्टं महामनाः ।
रामस्तु वपनं कृत्वा स्नात्वा सम्यग्विधानतः ॥ २८
उत्थानश्राद्धमकरोद्ब्राह्मणैः कथितं यथा ।
विश्रान्तिश्राद्धमारभ्य मन्त्राग्निमुभयोरदात् ॥ २९
तदैव प्रययौ तं तु दत्तात्रेयं मुनिं प्रति ।
कुवेषं शिष्यसहितं श्वहस्तं मलिनं कृशम् ॥ ३०
ध्यानेनालोक्य तं रामो ननाम मुनिपुङ्गवम् ।
बद्धाञ्जलिपुटोऽतिष्ठद्यामार्धं तत्पुरो मुने ॥ ३१
दत्तात्रेयोऽपि सर्वज्ञो बुद्ध्वा तस्याशयं मुनिः ।
उवाच राममामन्त्र्य ज्ञातस्तव मनोरथः ॥ ३२

पृच्छाम्यथापि विज्ञातुं किमर्थं त्वमिहागतः ।
स उवाच ततो रामो वृत्तान्तं चादितः स्फुटम् ॥ ३३

राम उवाच—

कृतवीर्यात्मजो राजा पितुराश्रममागतः ।
भोजितः परमान्नेन नानापक्वान्नशालिना ॥ ३४
भुक्त्वा स सेनया सार्धं कामधेनुमयाचत ।
यदा न दत्ता पित्रा मे बलान्नेतुं मनो दधे ॥ ३५
सा ताडिताथ सुषुवे सैनिकानां गणान् बहून् ।
तैर्भग्नो बलिभी राजाससैन्योऽगान्निजालयम् ॥ ३६
कामधेनुर्गता स्वर्गं ततो राजा रुषान्वितः ।
जमदग्नेर्हृदि शरं प्राक्षिपद्दृढमोजसा ॥ ३७
एकविंशतिकान् बाणान् मातुरङ्गेऽक्षिपद्रुषा ।
नाहं तत्र स्थितो ब्रह्मन् पश्चादागत्य दृष्टवान् ॥ ३८
मन्त्राग्निना तु दग्धौ तौ मातृवाक्यादिहागतः ।
दत्तात्रेयं विना नान्यो वक्ता कार्येऽत्र कर्मणि ॥ ३९
कृते कर्मणि सर्वस्मिंस्त्रयोदशदिनावधि ।
पश्चाद्राजा निहन्तव्यः कृतवीर्यात्मजो बली ॥ ४०
एकविंशतिवारं च कार्या निःक्षत्रिया मही ।
इत्थमाज्ञापयन्मह्यं जननी रेणुका मम ॥ ४१
इत्यर्थमिह संप्राप्तस्तस्मात् कुरु कृपां मयि ।

स्कन्दः—

इति रामवचः श्रुत्वा रेणुकायाः सखा मुनिः ॥ ४२
शोकसंविग्नहृदयो राममूच इदं वचः ।

दत्त उवाच—

यद्गृहे भुक्तमत्यन्तं तेन नेष्टा विरोधिता ॥ ४३
यदि दुष्टेन साकारि दृष्टं तत्फलमन्तिकात् ।
इदानीं तु तयोः सम्यगौर्ध्वदेहिकमाचर ॥ ४४

स्कन्दः—

तत आश्रममागत्य दत्तात्रेययुतस्तु सः ।
रामश्चकार भक्त्यैव पित्रोरुत्तरकर्म तत् ॥ ४५

दत्तात्रेयोक्तमन्त्रैः स द्वितीयदिवसावधि ।
समाप्ते कर्मणि मुनिर्गन्तुं कोल्हापुरं मनः ॥ ४६
चक्रे तदाब्रवीद्रामः कदायाति भवान् पुनः ।
मुनीन्द्रश्च यदा त्वं मे स्मरणं वै करिष्यसि ॥ ४७
एहि दत्तात्रेय इति तदा मां द्रक्ष्यसेऽनघ ।
कृत्वा कर्म व्रजत्येव भिक्षितुं च दिने दिने ॥ ४८
अशौचिनो न भोक्तव्यमन्नमित्यभिचिन्तयन् ।
पञ्चमे दिवसे कर्म समाप्य मुनिपुङ्गवः ॥ ४९
गृहीत्वाज्ञां गतो यावत्तावद्व्याघ्रः समाययौ ।
मातर्मातः क यास्यद्येत्येवं चुक्रोश तद्भयात् ॥ ५०
आविरासीत्तदा माता रेणुका रामवाक्यतः ।
असंपूर्णशिरोमात्रा पुत्रस्नेहवशेन हि ॥ ५१
यदि द्वादशरात्रात् साहूता स्याद्भार्गवेण तु ।
आगता सा भवेत् पूर्णा सर्वावयवशोभिता ॥ ५२
उवाच तं किमाहूता वद बाल प्रयोजनम् ।
आलिलिङ्ग तदा स्नेहाद्रामं स्नुतपयोधरा ॥ ५३
दत्तात्रेयः पुनरगात् षष्ठेऽथ दिवसे मुनिः ।
अपश्यद्रेणुकां तत्र तादृशीं राममब्रवीत् ॥ ५४
मध्य एव किमाहूता न्यूनदेहा समागता ।
सपिण्डीकरणादूर्ध्वं यद्याहूता तदाखिला ॥ ५५
आगता स्याद्रेणुकेयं तव स्नेहाद्द्विजर्षभ ।

राम उवाच—

बालभावाद्भयाद्ब्रह्मन् स्वभावान्मातरित्यहम् ॥ ५६
उक्तवान् मुनिशार्दूल दृष्टवानीदृशीमिमाम् ।
वृषोत्सर्गं च कृतवानेकादशदिने द्विजः ॥ ५७
सपिण्डीकरणं चैव द्वादशे कृतवान् द्वयोः ।
ततः परेऽह्नि पाथेयं श्राद्धं पुण्याहवाचनम् ॥ ५८
ददौ दानान्यनेकानि ब्राह्मणेभ्यो यथार्हतः ।
जमदग्निर्दिव्यदेहो ब्रह्मलोकमथागमत् ॥ ५९
तस्थौ सा रेणुका भूमौ स्थाने स्थाने च तादृशी ।
पूरयत्यखिलान् कामान् जनानां भक्तिकारिणाम् ॥ ६०

एकस्मिन् दिवसे रामो मातरं परिपृष्टवान् ।

रामः—

यस्मादिन्द्रादयो देवा बिभ्यति त्रासकम्पिताः ॥ ६१
अनन्तं यस्य सैन्यं तच्चतुरङ्गसमन्वितम् ।
कथं विजेष्ये तं मातरुपायं मेऽखिलं वद ॥ ६२
एकविंशतिवारं च कुर्यां निःक्षत्त्रियां धराम् ।
करिष्ये वद तत्सर्वं त्वत्प्रसादाज्जयो भवेत् ॥ ६३
अतुला मम कीर्तिश्च सर्वलोकेषु विश्रुता ।

मातोवाच—

विजयस्ते भवेत् पुत्र शंकराराधनं कुरु ॥ ६४
तुष्टे तस्मिन् महादेवे सर्वं सेत्स्यति वाञ्छितम् ।
इति तद्वचनं श्रुत्वा भ्रमन् रामो वनेषु च ॥ ६५
श्रीदक्षिणकुटीद्वीपं प्रययौ दैवयोगतः ।
पशुतीर्थे स्वयं स्नात्वा देवं पशुपतीश्वरम् ॥ ६६
संपूजयंस्तपश्चक्रे द्वादशाब्दं च भार्गवः ।
आविर्भूय पुरस्तस्य स्वयंभूतेश्वरः शिवः ॥ ६७
उवाच तं प्रसन्नात्मा रेणुकातनय द्विज ।
वृणु त्वं वाञ्छितान् कामान् दास्ये सत्यं न संशयः ॥ ६८
इति शंभुवचः श्रुत्वा प्रार्थयामास भार्गवः ।

रामः—

योऽप्रमेयोऽखिलाधारः सृष्टिसंहारकारकः ॥ ६९
यो न वेदैर्न तपसा न यज्ञैर्व्रतसञ्चयैः ।
न दानैर्नैव योगैश्च जनानां दृष्टिगोचरः ॥ ७०
ईशस्त्वं हि मया दृष्टोऽनुग्रहात्तव शंकर ।
किमन्यद्वरये देव भक्तिं देहि निजां दृढाम् ॥ ७१

महेश उवाच—

भविता मयि भक्तिस्ते दृढा राम द्विजोत्तम ।
प्रलोभितस्यापि वरैर्न ते बुद्धिः सुविह्वला ॥ ७२
परशुं मे गृहाण त्वं सर्वशत्रुनिबर्हणम् ।
पर्शुनानेन ते नाम त्रैलोक्ये ख्यातिमेष्यति ॥ ७३

स्कन्दः—

एवं तस्मै वरं दत्त्वा परशुं च महेश्वरः ।
पश्यतां सर्वलोकानामन्तर्धानं ययौ तदा ॥ ७४
संपूज्य शम्भुं रामस्तु प्रययौ निजमन्दिरम् ।
ततो रामो जुहावोच्चैः कार्तवीर्यं धरापतिम् ॥ ७५
युद्धे तु शातयामास राज्ञो बाहुसहस्रकम् ।
निःक्षत्त्रियां च पृथिवीं चक्रे त्रिःसप्तवारतः ॥ ७६
ब्राह्मणेभ्यो ददौ पृथ्वीं यज्ञं कृत्वा सदक्षिणम् ।
पुपूजुस्तं ततो लोका ज्ञात्वा विष्णुं तमीश्वरम् ॥ ७७
दृष्ट्वा पराक्रमं तस्य सर्वदेवातिगं दृढम् ।
एवं नानाविधो ब्रह्मन् स्वयंभूतेश्वरस्य च ॥ ७८
निरूपितश्च महिमा किमन्यच्छ्रोतुमिच्छसि ।

॥ इति श्रीदक्षिणकुटीद्वीपक्षेत्रमाहात्म्ये भार्गवपरशुप्राप्तिर्नाम अष्टादशोऽध्यायः ॥

## ॥ अथैकोनविंशोऽध्यायः [नागेशतपश्चर्या] ॥

सनत्कुमारः—

श्रीदक्षिणकुटीद्वीपे स्वयंभूतेश्वरस्थले ।
अन्ये केऽपि समाराध्य स्वयंभूतेश्वरं शिवम् ॥ १
कान् कान् वरांश्च संप्रापुः कृपया वद षण्मुख ।

स्कन्द उवाच—

कस्मिंश्चित् समये शम्भुः पार्वत्या सहितो मुने ॥ २
सुखासीनो गिरिवरे रम्यसानुशिलोच्चये ।
नानाद्रुमलताकीर्णे निर्झरारावशब्दिते ॥ ३
गुञ्जन्ति भ्रमरा यत्र रुक्मपङ्कजवासिनः ।
चम्पकाशोकबकुलमालतीकुसुमानिलः ॥ ४
आनन्दयति चित्तानि वसतां यस्य शेखरे ।
आययुस्तत्र गन्धर्वा अप्सरोयक्षकिन्नराः ॥ ५

देवाश्च मुनयो नागास्तं द्रष्टुं गिरिजापतिम् ।
केचित्तं प्रणिपातेन साष्टाङ्गेनाभ्यवादयन् ॥ ६
उच्चैर्जगुश्च गन्धर्वा ननृतुश्चाप्सरोगणाः ।
पुपूजुस्तं दशभुजं व्याघ्राजिनधरं हरम् ॥ ७
नन्दिभृङ्गिगणाकीर्णं फालचन्द्रं त्रिशूलिनम् ।
भस्माङ्गं शेषशिरसं शंकरं वृषभध्वजम् ॥ ८
अपरैरर्चितं देवमुपचारैर्मनोमयैः ।
निमील्य नयने तस्थुः केचिद्ध्यानपरायणाः ॥ ९
वसिष्ठो वामदेवश्च जमदग्निस्त्रितो द्विजः ।
अत्रिः कण्वो भरद्वाजो गौतमाद्या मुनीश्वराः ॥ १०
तुष्टुवुर्विविधैः स्तोत्रैस्तत्र तं पार्वतीपतिम् ।
स्तुवत्सु तेषु मुनिषु शेषो गर्वं परं ययौ ॥ ११
अहमेव श्रेष्ठतरो लोकेषु त्रिषु नापरः ।
यतः श्रेष्ठतरः शम्भुस्तस्याहं शिरसि स्थितः ॥ १२
धराधरणसामर्थ्यं मयि नान्यत्र कुत्रचित् ।
वासुके रज्जुभूतान्मत्कुलीनादमृतं सुरैः ॥ १३
प्राप्तं ततोऽमरत्वं च तस्मान्नान्योऽस्ति मत्परः ।
तद्धृदिस्थं तदा गर्वं ज्ञात्वा शम्भुस्त्रिलोककृत् ॥ १४
विज्ञायाखिलदृक् तूष्णीमुत्तस्थौ सहसा शिवः ।
आस्फालयद्धरापृष्ठे शेषं तादृशगर्वितम् ॥ १५
एकैको मस्तकस्तस्य दशधा दशधाभवत् ।
मूर्छितः प्रहरार्धं स गतप्राण इवाभवत् ॥ १६
ततः प्रभूत्यसौ जातः सहस्रफणमण्डितः ।
जीवशेषः शुशोचाथ शेषः शेषाहिभूषणः ॥ १७
अलंकरणभूतोऽहं त्रैलोक्येशहरस्य ह ।
इमामवस्थां संप्राप्तो न जाने केन कर्मणा ॥ १८
चलितुं नैव शक्नोमि पक्षहीन इवाण्डजः ।
किं करोमि क गच्छामि को मे त्राताधुना भवेत् ॥ १९
को मे निजपदप्राप्तावुपायं कथयेच्छुभम् ।
को वा मेऽपनयेद्दुःखमिति चिन्तापरस्तु सः ॥ २०

ददर्श तेन मार्गेण गच्छन्तं नारदं मुनिम् ।
जहर्ष किञ्चिन्नागेन्द्रः स्वप्नं प्रप्येव भिक्षुकः ॥ २१
अतिकष्टामवस्थां तां नारदोऽलोकयत् पुरः ।
निश्चेष्टं निरनुश्वासं ध्याननिष्ठं यथा मुनिम् ॥ २२
अशेषविषयज्ञोऽपि शेषं पप्रच्छ नारदः ।

नारद उवाच—

किमर्थमेवं जातोऽसि निस्तेजा दुःखितो भृशम् ॥ २३
कथं भग्नशिराः कस्याचरोऽप्रियतरं मुनेः ।
किं वा क्षुब्धो गिरीशस्तेऽकारि गर्वस्त्वयाथ किम् ॥ २४
वद किं कारणं शेष प्रतीकारं वदामि ते ।
त्वां विना धारयेत् को नु चराचरयुतां धराम् ॥ २५
अनुक्तवति तस्मिंस्तु स्वयमेवाब्रवीन्मुनिः ।
उपायं नागराजस्य स्वस्थानप्रापकं शुभम् ॥ २६

नारदः—

अवधारय मे वाक्यं शेषाशेषकलानिधे ।
सुपर्वाणश्च केशाद्या येन स्युः किङ्करा इव ॥ २७
धरिष्यसे धरां मूर्ध्नि पुष्पमालामिवार्भकः ।

शेष उवाच—

किञ्चित् पुरातनं पुण्यमासीद्येद्दर्शनं तव ॥ २८
अजन्यकस्मादग्रेऽपि सम्यङ्मे स्यान्न संशयः ।
अन्यथा कृतपुण्यानां दर्शनं तु कथं भवेत् ॥ २९
अतिविह्वलगात्रत्वादशक्तो भूमिधारणे ।
तं प्रयत्नं वद मुने येनाहं स्यां यथा पुरा ॥ ३०

नारद उवाच—

फणिन् महामतुं तेऽद्य तस्य देवस्य नागराट् ।
यस्य प्रसादादिन्द्राद्यास्तत्तत्पदमवाप्नुवन् ॥ ३१
केशा यदाज्ञया शेष सृष्टिस्थित्यन्तकारिणः ।
यस्मिन् प्रसन्ने सर्वेशे पूर्वावस्थामवाप्स्यसि ॥ ३२
कारुण्यं तव दृष्ट्वैव छिन्नं मे सर्प मानसम् ।
अष्टाक्षरं महामन्त्रं महेशस्य ददामि ते ॥ ३३

अस्यानुष्ठानमात्रेण प्रत्यक्षस्ते महेश्वरः ।
सर्वान् विधास्यते कामान् यान् यान् त्वं वृणुषे ततः ॥ ३४

स्कन्दः—

कृत्वोपदेशं शेषाय तमूचे नारदः पुनः ।
दक्षिणे दण्डकारण्ये क्षेत्रमस्ति महत्तरम् ॥ ३५
स्वायंभुवं तु प्रलये नाशोत्पत्तिविवर्जितम् ।
श्रीदक्षिणकुटीद्वीपमिति तत्तु प्रविश्रुतम् ॥ ३६
स्वयंभूतं महालिङ्गं ज्योतीरूपं विराजते ।
तत्र गत्वा कुरु तपः क्षिप्रं सिद्धिमवाप्स्यसि ॥ ३७
एवमुक्त्वा नारदस्तु क्षणादन्तर्हितोऽभवत् ।
शेषोऽपि तपसे कृत्वा निश्चयं परमं शुभम् ॥ ३८
श्रीदक्षिणकुटीद्वीपं गत्वा नत्वा सदाशिवम् ।
निरुद्धाशेषकरणो ध्यात्वा देवं सदाशिवम् ॥ ३९
जजाप परमं मन्त्रं सहस्रपरिवत्सरम् ।

सनत्कुमारः—

अष्टाक्षरं महेशस्य कृपया वद षण्मुख ॥ ४०

स्कन्द उवाच—

अष्टाक्षरस्य मन्त्रस्य नारदो ऋषिरुच्यते ।
अनुष्टुप्छन्द आख्यातं महादेवस्तु देवता ॥ ४१
ओं बीजं तु नमः शक्तिर्महादेवाय कीलकम् ।
न्यासाः प्रकीर्तिता बीजशक्तिकीलकमन्त्रकाः ॥ ४२

ध्यानम्—

भानोर्मण्डलमध्यगं त्रिनयनं चन्द्रार्धचूडोज्ज्वलं
तप्तस्वर्णसमानकान्तिरुचिरं पर्शुं कुठारं मृगम् ।
हस्तैर्धारकमीश्वरं त्वभयदं वामे शिवासंयुतं
ब्रह्मेशानहरीन्द्रभास्करमुखैः संपूजितं भावये ॥ ४३
ओं नमो महादेवाय महामन्त्र उदीरितः ।
तारं षट्कोणमध्ये स्फुरदनलपुरे वृत्तमध्ये त्रिकोणे
बीजं शक्तिं च कीलं रसपुटविवरे मूलमन्त्रस्य वर्णान् ।
गायत्रीं सद्यपूर्वान् स्वरदलकमले वृत्तके भूपुरे वै
केशानां बीजमन्त्रान् विलिखतु विधिना मातृका दिक्पतींश्च ॥

एवं यन्त्रं लिङ्गमध्ये विभाव्य फणिनायकः ।
पूर्णयोगधरो भूत्वा जजाप परमं मनुम् ॥ ४५
दिव्यवर्षसहस्रान्ते महादेवो घृणानिधिः ।
आविरासीत् पुरस्तस्य वृषभं वाहमास्थितः ॥ ४६
वामे तस्य स्थिताभूच्च शक्तिः सा लोकनायिका ।
दक्षिणे गणनाथस्तु मूषकोपरि सुस्थितः ॥ ४७
मयूरवाहनारूढो वामेऽतिष्ठत् षडाननः ।
नन्दिभृङ्गिमहाकालपूर्वाः शम्भुगणेश्वराः ॥ ४८
अतिष्ठन् परितः सर्वे ब्रह्मविष्णुमहेश्वराः ।
इन्द्राग्निपूर्वकाश्चापि समन्तात् सुस्थिता बभुः ॥ ४९
तदा शम्भुं नागराजो ववन्दे भावपूर्वकम् ।
बद्धाञ्जलिपुटो भूत्वा तुष्टाव ध्यानसास्थितः ॥ ५०

॥ इति श्रीदक्षिणकुटीद्वीपक्षेत्रमाहात्म्ये नागेशतपश्चर्या नामैकोनविंशोऽध्यायः ॥

## ॥ अथ विंशोऽध्यायः ॥ [अपराधक्षान्त्याख्यनागेशस्तुतिः] ॥

शेषः—

क्रूरं दुष्टतरं विनष्टहृदयं गर्वेण संशोभितं
पापात्मानमनन्तदोषसहितं मूर्खं खलं दुर्मुखम् ।
अज्ञानेन समावृतं मदयुतं दूष्यं सदा नागपैः
कारुण्याकर भोः पितः पशुपते दोषाकरं पाहि माम् ॥
देवैर्गर्हितकृत्यसंयुतमिमं निन्द्यं सदा योगिभि-
र्नागानां कुलदूषकं तु सुगुणैः संवर्जितं दुर्गुणम् ।
पापानां निलयं सुदुष्टचरितं लोके नृशंसं जडं
कारुण्याकर भोः पितः पशुपते दोषाकरं पाहि माम् ॥
नानारूपमहोपपातकयुतं लोके त्वहंभाविनं
मोहानां निलयं महेश्वरविभोर्नानापराधान्वितम् ।
लोके दूषितपापकृत्यसहितं पित्रादिभिर्धिक्कृतं
कारुण्याकर भोः पितः पशुपते दोषाकरं पाहि माम् ॥

मूढं सत्यविवर्जितं पशुपतौ विश्वाससंवर्जितं
वेदज्ञानविहीनकं खलमतिं क्रोधान्वितं मूर्खकम् ।
वेदाचारविनिन्दकं बुधजनैः सन्दूषितं सर्वदा
कारुण्याकर भोः पितः पशुपते दोषाकरं पाहि माम् ॥ ४
लोके दुष्टजनाश्रितं खलजनैः संवासशीलान्वितं
देवब्राह्मणदूषकं क्षितितले देहस्य सौख्ये रतम् ।
साधूनामपि वञ्चकं सुरमुनीन्द्राणां सदा दूषकं
कारुण्याकर भोः पितः पशुपते दोषाकरं पाहि माम् ॥ ५
वर्णाचारविहीनकं खलजनासक्त दुराचारकं
बुद्धाचारकसंयुते जनगणे प्रीत्यान्वितं वैदिके ।
द्वेषेणैव समन्वितं परशिवे दोषस्य सबोधकं
कारुण्याकर भोः पितः पशुपते दोषाकरं पाहि माम् ॥ ६
नीचाचारकबौद्धमार्गगजनानां पोषकं वैदिके
द्वेषाढ्यं निजधर्ममार्गनिरतानां पीडकं यत्नतः ।
चण्डालादिकनीचयोनिजनिते प्रीत्यान्वितं तामसं
कारुण्याकर भोः पितः पशुपते दोषाकरं पाहि माम् ॥ ७
शैवाचारविवर्जितं निगमके विश्वाससंवर्जितं
दीक्षामार्गविनिन्दकं च पशुवत् कृत्यत्रयेणान्वितम् ।
वेदे चागममार्गगे स्मृतिवरे प्रामाण्यसंवर्जितं
कारुण्याकर भोः पितः पशुपते दोषाकरं पाहि माम् ॥ ८

स्कन्दः—

स्तोत्रं शेषकृतं शिवप्रियकरं पापार्तिशान्तिप्रदं
यो वा भक्तिपुरःसरं प्रतिदिनं शंभोः पठेत् सन्निधौ ।
मुक्तः पापगणाद्धनादिकसुखं संप्राप्य भूम्यां नरो
देहान्ते मुनिदेवबृन्दनुदितः कैलासलोकं भजेत् ॥ ९
एवं स्तुत्वा महादेवं स्वयंभूतेश्वरं शिवम् ।
वरयामास यान् कामान् तान् शृणुष्व महामुने ॥ १०

शेष उवाच—

अद्य धन्यं तपो ज्ञानं पिता माता जनुर्मम ।
देहो नेत्राणि भूरीणि मस्तकानि बहूनि च ॥ ११

त्वां स्तोतुं संप्रवृत्ता या धन्यास्ता रसना मम ।
कुलं शीलं च धन्यं मे त्वदङ्घ्रियुगदर्शनात् ॥ १२
अखण्डितं ते भजनं देहि मेऽखण्डविक्रम ।
दुःखं किं किन्तु वक्तव्यं सर्वज्ञ त्वयि शंकर ॥ १३
अखर्वगर्वकरणात् स्फुटिता मस्तका मम ।
महारुषा त्वयैवेश स्फालितस्य महीतले ॥ १४
नारदस्य प्रसादेन दृष्टं ते चरणाम्बुजम् ।
इदानीं देव मे देहि श्रेष्ठतां भुवनत्रये ॥ १५
पाटवं सर्वशिरसि सामर्थ्यं धारणे भुवः ।
अचलं देहि मे स्थानं दर्शनं ते निरन्तरम् ॥ १६

शिव उवाच—

यदि ते दशधा जातो मस्तको भुजगाधिप ।
तदा सहस्रवदनः सहस्रफणमण्डितः ॥ १७
भविष्यसि जने ख्यातो यावच्चन्द्रार्कतारकाः ।
धराधरणसामर्थ्यं दृढं तव भविष्यति ॥ १८
एवं ददौ वरांस्तस्मै भूषणं तं दधार सः ।
शेषस्य मस्तके हस्तमभयार्थं ददौ शिवः ॥ १९
स्वयं विराट्स्वरूपं स्वं शेषायादर्शयन्मुदा ।
शब्देनापूरयद्व्योम भूतलं विदिशो दिशः ॥ २०
यस्य पादतले भूमिर्दिशः श्रोत्रेऽक्षिणी रविः ।
ओषध्यो यस्य रोमाणि नखा यस्य धराधराः ॥ २१
मेघाः स्वेदोदकं यस्य प्रजनश्चतुराननः ।
कुक्षौ यस्य जगत् सर्वं चत्वारश्चैव सागराः ॥ २२
अनन्तास्न एको योऽप्यनन्तनयनः स्वराट् ।
अनन्तरूपी चानन्दशक्तिरत्यन्तदीप्तिमान् ॥ २३
यद्रोमकूपे भान्ति स्म ब्रह्माण्डानि सहस्रशः ।
दृष्ट्वा तं तादृशः शेषो भीत्या भ्रान्त इवाभवत् ॥ २४
प्रार्थयामास गौरीशं पुनः सौम्यो भवेति च ।
तथोमासहितो देवो वृषारूढोऽभवच्च सः ॥ २५
उवाच वरदः शम्भुर्नेहरदृष्टः सुरैरपि ।

मदनुग्रहतोऽदर्शि त्वया शेषाद्य भाग्यतः ॥ २६
अचलं मयि ते स्थानं विष्णौ च गणनायके ।
पातालभवने चापि मया दत्तं न संशयः ॥ २७
मम शेष प्रसादेन धर पुष्पमिवाद्य गाम् ।
अनन्तेशो भवाम्यत्र पूजितो भवता यतः ॥ २८
नागेश्वरश्चेति नाम्ना तिष्ठाम्यत्र न संशयः ।
एवं तस्मै वरान् दत्त्वा नागेशानस्तिरोऽभवत् ॥ २९
एवं तु भगवान् शेषः समाराध्य महेश्वरम् ।
नानावरांश्च संप्राप स्थलेऽस्मिन् मुनिसत्तम ॥ ३०

॥ इति श्रीदक्षिणकुटीद्वीपक्षेत्रमाहात्म्येऽपराधक्षान्त्याख्यनागेश-स्तुतिर्नाम विंशोऽध्यायः ॥

## ॥ अथैकविंशोऽध्यायः [प्रतिसूर्यसुमालिरथप्राप्तिः] ॥

स्कन्द उवाच—

विप्रचित्तिसुतो लोके सैंहिकेय इति श्रुतः ।
सुधापानेन राहुस्तु देवपङ्क्तिगतोऽभवत् ॥ १
तमोमण्डलमाश्रित्य सूर्यचन्द्रविहिंसकः ।
सञ्जातस्तस्य पुत्रस्तु सुमाली चेति विश्रुतः ॥ २
सूर्येण दर्शितत्वाद्धि पितरं मे जनार्दनः ।
द्विधाकरोत्तेन सूर्यपूजनं विष्टपत्रये ॥ ३
नाशयामीति निश्चित्य कार्यसिद्ध्यै महासुरः ।
शुक्रं तु शरणं प्राप स्वाशयं चाब्रवीत्तदा ॥ ४
त्वमाराधाय गौरीशं सिद्धिक्षेत्रे धरातले ।
पञ्चाक्षरेण मनुना प्रसन्नः परमेश्वरः ॥ ५
तवाभीष्टान् वरांस्तुभ्यं प्रयच्छेन्नात्र संशयः ।
इत्युक्त्वा च महादेवमनुं चापि समादिशत् ॥ ६
दैत्येन्द्रो भूतलं प्राप्य परिबभ्राम दण्डके ।
श्रीदक्षिणकुटीद्वीपं दैवात् प्राप स दानवः ॥ ७

ज्योतीरूपं क्षेत्रवरमपश्यद्दानवेश्वरः ।
ज्योतिर्मयं महालिङ्गं दृष्ट्वा हर्षसमन्वितः ॥ ८
तत्र स्थित्वा तपः कर्तुं चकार च विनिश्चयम् ।
पशुतीर्थे स्वयं स्नात्वा पुपूज परमेश्वरम् ॥ ९
देवस्य सन्निधौ स्थित्वा जपन् पञ्चाक्षर मनुम् ।
देहभावं परित्यज्य काष्ठपाषाणवत् स्थितः ॥ १०
दिव्यं वर्षसहस्रं वै तताप परमं तपः ।
वसिष्ठेशः पशुपतिः स्वयंभूतेश्वरः शिवः ॥ ११
आविर्बभूव पुरतो लिङ्गमध्याच्छिवायुतः ।
ज्योतीरूपं महेशानं स्तुत्वा नत्वा स दानवः ॥ १२
हस्ताञ्जलिपुटो भूत्वा प्रार्थयामास सादरम् ।

दानवः—

सूर्यस्य रथवत्तेजोमयं रथमनुत्तमम् ॥ १३
व्योमगं मम चित्तानुसारेण गतिसंयुतम् ।
देहि देव महेशान स्वयंभूतेश्वर प्रभो ॥ १४

स्कन्दः—

एवं तत्प्रार्थनां श्रुत्वा प्राह तं परमेश्वरः ।
स्वयंज्योतिःस्वरूपं स्यात् क्षेत्रमेतद्धरात्मकम् ॥ १५
अस्मात् सृष्ट्वा रथं दिव्यं तुभ्यं दास्ये च दानव ।
यावज्जीवं तु दैत्येन्द्र रथस्तिष्ठेन्न संशयः ॥ १६
तव नाशात् परं चैष क्षेत्रे लयमवाप्नुयात् ।
एवमुक्त्वा महादेवः सूर्यस्य रथवत्तदा ॥ १७
तस्मात् क्षेत्रात् स्वयं सृष्ट्वा सप्ताश्वपरिशोभितम् ।
प्रददौ दानवेन्द्राय दैत्यो लब्ध्वा रथं वरम् ॥ १८
नत्वा शम्भुं पुनर्भक्त्या प्रार्थयामास सादरम् ।

दानवः—

इदं क्षेत्रं रथपुरमिति नाम प्रविश्रुतम् ॥ १९
प्राप्नोतु त्वं महादेव रथदायक हे प्रभो ।
नाम्ना रथपुरेशेति ख्यातिं याहि जगत्तले ॥ २०

एवं तत्प्रार्थनां श्रुत्वा तथास्त्विति वरं ददौ ।
देवं रथपुरेशानं नत्वा संपूज्य दानवः ॥ २१
आरुह्य च रथं दिव्यं भानुवद्भासयञ्जगत् ।
गुरोश्च निकटं गत्वा वृत्तं सर्वं न्यवेदयत् ॥ २२
तदाज्ञया च पितरौ संप्राप्य त्रिनयेन च ।
नत्वा वरानशेषेण प्राह प्रीतिपुरस्सरम् ॥ २३
तयोश्च शासनेनैव स्वस्थानमगमत्ततः ।
शुभे लग्ने मुहूर्ते च दानवैरनुमोदितः ॥ २४
सूर्यस्य रथवत् स्थाप्य व्योम्नि तेजोमयं वरम् ।
प्रकर्तुं चैव सञ्चारं प्रारेभे सूर्यवत् स्वयम् ॥ २५
यत्रास्तमेति भानुस्तत्रोदेति च स दानवः ।
यत्रोदेति च सूर्योऽयं तत्रास्तमनमेति च ॥ २६
एवं तु सूर्यवन्मेरुं स चकार प्रदक्षिणम् ।
तदा लोकत्रये चापि रात्रिकालस्तु नाभवत् ॥ २७
रात्रेः कृत्येन रहितं सञ्जातं विष्टपत्रयम् ।
सदोदयं सदामध्यं सञ्जातं रात्रिवर्जितम् ॥ २८
कोलाहलो महानासीद्द्वौ सूर्यौ चरतो यतः ।
चन्द्रप्रकाशहीनत्वान्नक्षत्रैरपि संयुतः ॥ २९
न ज्ञायते रात्रिकालस्तेन सर्वे जगत्तले ।
क्षयं प्राप्तुं प्रारभन्त देवातिर्यङ्नरा अपि ॥ ३०
नारदाद्वृत्तमेतत्तु श्रुत्वा कश्यपनन्दनः ।
हन्तुं दैत्यं स्वात्मवच्च व्योम्न्येव गतिसंयुतम् ॥ ३१
इच्छन् वृत्तमशेषेण चारुणाय जगाद ह ।
स्वरथं दैत्यराजस्य रथस्याभिमुखेन च ॥ ३२
निनाय चारुणो धीमान् मार्तण्डः कश्यपात्मजः ।
युयुधे दानवेनैव सोऽपि युद्धं चकार ह ॥ ३३
सूर्यास्त्रेणैव तं दैत्यमवधीत् कश्यपात्मजः ।
रथं तं पातयामास भूतले दानवेन च ॥ ३४
दानवस्यैव मरणाच्छिववाक्यानुसारतः ।
श्रीदक्षिणकुटीद्वीपे क्षेत्रे रथपुरे वरे ॥ ३५
लयमासीद्रथश्चायं दानवेन्द्रः परे शिवे ।

लयं प्राप महादेवो भक्तवात्सल्यसंयुतः ॥ ३६
अट्टहासं तदा चक्रे मण्डलं भास्करस्य च ।
कक्षावृत्तपरिभ्रष्टं बभ्राम व्योममण्डले ॥ ३७
आदित्यः कश्यपसुतो भीतभीतो धरातले ।
रथाड्डोलायमानाच्च काशीक्षेत्रे पपात च ॥ ३८
ब्रह्मादयो देवगणाः सान्त्वयित्वा महेश्वरम् ।
रथं डोलायमानं तु पूर्ववत् स्थाप्य वै क्रमात् ॥ ३९
तस्मिन् वै स्थापयामासुः कश्यपस्य सुतं रविम् ।
शिवभक्तवधाद्भीतः कश्यपस्य सुतो रविः ॥ ४०
स्वयं रथपुरं गत्वा देवं रथपुरीश्वरम ।
स्वयंभूतं सुसंपूज्य चकार च महत्तपः ॥ ४१
प्रादुर्भूय पुरस्तस्य शिवः प्राह दिनेश्वरम् ।
गोलरूपरथे स्थित्वा कालचक्रं नयस्व च ॥ ४२
स्थित्वा भानोर्मण्डले तु कर्मणामाश्रयो भव ।
ग्रहाणामधिपो भूत्वा बुधशुक्रादिसंयुतः ॥ ४३
मेरुं प्रदक्षिणीकृत्य कुरु विश्वप्रकाशनम् ।
एवं तस्मै वरान् दत्त्वा तिरोऽभूत् परमेश्वरः ॥ ४४
एवं रथपुरेशानं संपूज्य दिननायकः ।
मण्डले स्वस्य निलयं स्वयं संप्राप्य पूर्ववत् ॥ ४५
कर्माधारश्च जगतां कालचक्रनियामकः ।
बभूव परमेशस्य प्रसादाल्लोकपूजितः ॥ ४६
श्रीदक्षिणकुटीद्वीपं वसिष्ठाश्रम इत्यपि ।
तथा रथपुरं चेति ख्यातं जातं धरातले ॥ ४७
स्वयंभूतेश्वरः शम्भुर्वसिष्ठेश्वर इत्यपि ।
अनन्तेशो रथपुरनायकश्चेति विश्रुतः ॥ ४८
पशुभिः पूजितत्वाच्च जातः पशुपतीश्वरः ।
बहुभिर्नामभिर्युक्तो बभूवास्मिन् स्थले शिवः ॥ ४९

॥ इति श्रीदक्षिणकुटीद्वीपक्षेत्रमाहात्म्ये प्रतिसूर्यसुमालिरथप्राप्तिर्नामैक-
विंशोऽध्यायः ॥

## ॥ अथ द्वाविंशोऽध्यायः [पुरुषोत्तमचक्रतीर्थनिर्मितिः] ॥

सनत्कुमारः—

श्रीदक्षिणकुटीद्वीपनायकस्य परात्मनः ।
भूयश्चापि महासेन माहात्म्यं वक्तुमर्हसि ॥ १

स्कन्द उवाच—

प्रारम्भे दिनकल्पस्य ब्रह्मा लोकपितामहः ।
यथापूर्वं तु जगतां सृष्टिं शिवनियोजितः ॥ २
चकार च तदा विष्णुर्निद्रां चक्रे समुद्रके ।
शेषशायी स्वयं भूत्वा महामायावशं गतः ॥ ३
ततः कतिपयाहस्सु गतेषु मुनिसत्तम ।
निद्रितस्य महाविष्णोः श्रोत्राज्जातौ महासुरौ ॥ ४
मधुकैटभनामानौ विख्यातौ भुवनत्रये ।
दंष्ट्राकरालवदनौ पिङ्गाक्षौ दीर्घनासिकौ ॥ ५
महाकायौ महारावावत्युच्चौ पर्वताविव ।
वर्षाम्बुदरशब्दौ तौ गर्जन्तौ भृशगर्वितौ ॥ ६
वचोभिर्बहुभिर्दुष्टैर्धिक्कारं तस्य चक्रतुः ।
विप्रान् देवानृषीन् साधून् शास्त्राणि च निनिन्दतुः ॥ ७
तयोः शब्देन धरणी चकम्पे शेष एव च ।
उद्विग्नमासीत् सकलं ब्रह्माण्डं स्वनतस्तयोः ॥ ८
ततस्तौ क्रोधरक्ताक्षौ विधिं खादितुमुद्यतौ ।
ततोऽसौ वरदां देवीं विष्णोर्मोहनकारिणीम् ॥ ९
विष्णुनेत्रगतां निद्रां तुष्टाव कमलासनः ।
महेश्वरप्रसादेन विष्णुहस्तात्तयोर्वधम् ॥ १०
ज्ञात्वा सम्यग्विचार्यैव चिन्ताहर्षसमन्वितः ।

ब्रह्मोवाच—

स्वाहास्वधारूपधरा सुधा त्वं
मात्रार्धमात्रास्वरूपिणी च ।
कर्त्री निहन्त्री जननी जनस्य
सतोऽसतः शक्तिरसि त्वमेव ॥ ११
श्रुत्यात्मिका कालमयी च काली
तमोगुणाधारमयी पराम्बा ।

लक्ष्मीरुमा भूमिजलाग्निरूपा
त्वं लोकमातर्भुवनेश्वरी त्वम् ॥ १२
सन्ध्यास्वरूपा रविमण्डलस्था
सुधाब्धिमध्ये मणिमञ्चसंस्था ।
आर्ये भवानी गिरिराजपुत्री
शक्तिः परेशस्य शिवस्य शम्भोः ॥ १३
त्रैलोक्यकर्ता विष्णुस्तु दैत्यदानवसूदनः ।
निद्रया व्याप्तचित्तोऽसौ ज्ञानविज्ञानवान् हरिः ॥ १४
दुष्टात्मानौ मोहयैतौ त्वं दैत्यौ मधुकैटभौ ।
हन्तुं च तौ दुराधर्षौ ज्ञानमस्य प्रदीयताम् ॥ १५
अहमाराधितश्चाभ्यां पूर्वजन्मन्यतन्द्रितम् ।
वरान् बहुविधान् प्रादामवध्यौ मम तावुभौ ॥ १६
तयोरुच्चावचान् शब्दानसहे बहुशः स्वयम् ।
मामेव हन्तुकामौ तौ स्तुतौ नानाविधैः स्तवैः ॥ १७
तथापि मद्वधात्तौ न निवृत्तौ दुष्टभावतः ।
अतस्त्वां प्रार्थये देवीं विष्णुबोधनहेतवे ॥ १८

स्कन्दः—

यावदुत्थापितो विष्णुस्तावत्ताभ्यां त्रिविष्टपम् ।
आक्रान्तमिन्द्रसदनं याम्यं कौबेरमेव च ॥ १९
तौ दृष्ट्वा सर्वतो देवाः पलायनपरा बभुः ।
निपेतुर्बभ्रमुः केचिन्मुमूर्च्छुश्चस्खलुः परे ॥ २०
ततो देव्या विनिर्मुक्तो निद्रया हरिरीश्वरः ।
आश्वास्य सर्वदेवांस्तांस्ताभ्यां युद्धं चकार ह ॥ २१
आक्रमं सर्वदेवानां कृतं ताभ्यामपोहितुम् ।
शेषादिसर्वनागानां मुनीनां यक्षरक्षसाम् ॥ २२
शुशुभे स हरिस्तत्र शङ्खचक्रगदाधरः ।
किरीटकुण्डलधरो नीलमेघघनच्छविः ॥ २३
ततः स भगवान् शङ्खं प्रदध्मौ भृशवेगवान् ।
तेन शब्देन महता क्षोभयामास रोदसी ॥ २४

पाञ्चजन्यस्वनं श्रुत्वा बिभिदे हृदयं तयोः ।
ततस्तौ भयसंविग्नौ परस्परमथोचतुः ॥ २५
भूमण्डलं च पातालं स्वर्गाणामेकविंशतिः ।
आक्रान्तः सम्यगावाभ्यां तदायं न श्रुतः स्वनः ॥ २६
वज्रसारमयं येन चकम्पे हृदयं तयोः ।
तस्मादनेन योद्धव्यं पुरुषेण बलीयसा ॥ २७
रणकण्डूतिशान्त्यर्थं विजयायेतराय वा ।
रिपुमेनं हनिष्यावो गच्छावो वा पुनर्भवम् ॥ २८
एवं तौ निश्चयं कृत्वा युयुत्सुं हरिमूचतुः ।
रणकण्डूतिशान्त्यर्थं दृष्टोऽसि पुरुषोत्तम ॥ २९
कथमुत्तमतां यासि ह्यावयोर्दृष्टिगोचरः ।

स्कन्दः—

इति वाक्यं तयोः श्रुत्वा प्रत्यूचे विष्टरश्रवाः ॥ ३०

हरिरुवाच—

सम्यगुक्तं महादैत्यौ यथेष्टं युध्यतां मया ।
न हि कामयते कश्चिन्मरणं स्वयमात्मनः ॥ ३१

तावूचतुः—

चतुर्भुजोऽसि देवेश बाहुयुद्धं ददस्व नौ ।

स्कन्द उवाच—

एवमुक्तो हरिस्ताभ्यां तथेत्याह मुदान्वितः ॥ ३२
त्यक्त्वायुधं नियुयुधे द्वाभ्यामेकश्चतुर्भुजः ।
जघ्नतुस्तौ शिरो मूर्ध्ना जङ्घाभिरथ जङ्घयोः ॥ ३३
कूर्परौ कूर्परैः स्वीयैर्बाहू बाहुभिरेव च ।
गुल्फौ गुल्फैः कटिं ताभ्यां नासिकाभ्यां च नासिकाम् ॥ ३४
मुष्टिभ्यां मुष्टिदेशं च पृष्ठाभ्यां पृष्ठमेव च ।
आस्फोटनविकर्षाभ्यां बहुभिर्मण्डलैरपि ॥ ३५
एवं परस्परं युद्धं प्रावर्तत चिरं तदा ।
सहस्रं पञ्चगुणितमतिक्रान्तं महामुने ॥ ३६
वर्षाणां न तु तौ जेतुं शशाक हरिरीश्वरः ।
जलमध्ये भ्रमित्वायं ध्यायन् शङ्करमीश्वरम् ॥ ३७

श्रीदक्षिणकुटीद्वीपं ददर्श जलमध्यगम् ।
तत्र गत्वा स्वयंभूतमपश्यल्लिङ्गमुत्तमम् ॥ ३८
अत्याश्चर्ययुतोऽभूच्च विष्णुर्योगेश्वरेश्वरः ।
जलहीनं द्वीपवरं स्वयंज्योतिःस्वरूपकम् ॥ ३९
शिवेन निर्मितं ज्ञात्वा तीर्थं चक्रेण पावनम् ।
उत्पाद्य विधिवत् स्नात्वा पुपूजे परमेश्वरम् ॥ ४०
प्रसन्नो भगवान् शम्भुर्हरये दर्शनं ददौ ।
नत्वा स्तुत्वा महादेवं प्राह विष्णुस्तु भक्तिमान् ॥ ४१

विष्णुः—

मयि क्षीराब्धिशयने निद्रिते मधुकैटभौ ।
उत्पन्नौ कर्णमलतो ब्रह्माणं भक्षितुं गतौ ॥ ४२
तेन निद्रा स्तुता भर्ग तयाहं प्रतिबोधितः ।
युद्धं च कृतवांस्ताभ्यां मल्ललीलामुपागतः ॥ ४३
नास्मि शक्तो विजेतुं तौ तत एव यदृच्छया ।
जले भ्रमन् क्षेत्रमिदं प्राप्तोऽहं त्वत्प्रसादतः ॥ ४४
तवैव दर्शनं लब्धं पूजया ते महेश्वर ।
नास्मि शक्तो विजेतुं तौ तत एतत् कृतं मया ॥ ४५
इदानीं तद्वधोपायं वद मे करुणानिधे ।

शिव उवाच—

सर्वादौ सर्वपूज्यं त्वमनभ्यर्च्य ममात्मजम् ॥ ४६
विघ्नेशं सिद्धिदातारं गतोऽसि रणभूमिकाम् ।
शक्तिहीनश्च तेनासि सुभृशं क्लेशवानपि ॥ ४७
विघ्नेशं पूजयित्वैव व्रज युद्धाय केशव ।
स च तौ माययामोह्य वशतां प्रापयिष्यति ॥ ४८

॥ इति श्रीदक्षिणकुटीद्वीपक्षेत्रमाहात्म्ये पुरुषोत्तमचक्रतीर्थनिर्मितिर्नाम द्वाविंशोऽध्यायः ॥

॥ अथ त्रयोविंशोऽध्यायः [ बालविनायकप्रसादान्मधुकैटभवधः ] ॥

शिववाक्यं हरिः श्रुत्वा पुनः पप्रच्छ शङ्करम् ।
हरिरुवाच—
को वा विघ्नेश्वरो देव कथं तव सुतो ह्ययम् ॥ १
कथमाराधनं शंभो वद सर्वं यथाक्रमम् ।
शिव उवाच—
अहमेव परं ब्रह्म परमेशः परः शिवः ॥ २
अहं सदा महिम्निस्थः परंज्योतिःस्वरूपवान् ।
उमासहायमूर्तिं च धृत्वा विश्वे विहारकृत् ॥ ३
जगतां सृष्टिसंहारपालनाय मया पुरा ।
सृष्ट्यादौ च गुणा भिन्नाः सञ्जाता मम वीक्षणात् ॥ ४
रजोंऽशाच्च विधिर्जातः सत्त्वांशात् केशवोऽभवत् ।
तमोंऽशाच्च हरो जातो गुणदेवा मदंशजाः ॥ ५
त्रिगुणानां समस्तांशात् सञ्जातश्च गणेश्वरः ।
गुणेश एव गणपो विघ्नेशो ब्रह्मणस्पतिः ॥ ६
महिमा गणनाथस्य स्वानन्दभवनं स्मृतम् ।
बुद्धिगं सिद्धिदं तं तु गाणपत्या भजन्ति च ॥ ७
विहारे गणपोऽयं वै पार्वत्या सहितस्य मे ।
पुत्रश्चैवेति कथितो वेदे पुष्टिपतिः स्मृतः ॥ ८
उमासहायमूर्तेर्मे लोके तिष्ठति मे सुतः ।
ब्रह्माण्डे कल्पभेदेन मम पुत्रस्य केशव ॥ ९
उत्पत्तिर्भिन्नमार्गेण कथ्यते निगमेषु वै ।
गुणरूपमिदं विश्वमेकैकगुणमुख्यतः ॥ १०
नानाविधत्वं संप्राप केशा वै गुणदेवताः ।
गुणत्रयसमष्ट्यंशमूर्तित्वाद्गणनायकः ॥ ११
सर्वादौ सर्वपूज्यश्च सञ्जातः श्रुतिमार्गतः ।
यद्ययं बुद्धिगो जातस्तदा सिद्धिं प्रयच्छति ॥ १२
तेनैव वेदास्तं प्राहुः सिद्धिबुद्धिपतिं त्विति ।
सिद्धिबुद्धिपतिर्देवः स्वानन्दभवनेश्वरः ॥ १३
पुष्टिलक्ष्मीः सिद्धिरेव विहारे परिकीर्तिता ।
सोऽयं पुष्टिपतिर्जातो विहारे मम पुत्रकः ॥ १४

मम पुत्रोऽथ मे भक्तैः पूजनीयो मदाज्ञया ।
त्वं मे भक्तो मम सुतं तव कार्यसुसिद्धये ॥ १५
भज भक्त्या बालचन्द्रधरं मे तनयं विभुम् ।
तस्य प्रियकरी विद्या श्रीमत्पञ्चदशाक्षरी ॥ १६
श्रीमत्पञ्चदशाक्षर्याः शिवोऽहमृषिरुच्यते ।
छन्दोऽतिशकरी तु स्याद्देवो बालविनायकः ॥ १७
गं बीजं प्रणवः शक्तिः स्वाहा वै कीलकं स्मृतम् ।
ओं गामित्यादयो न्यासाः षडङ्गाद्या जनार्दन ॥ १८
'ओं गं गणपतये' च प्रथमः खण्ड उच्यते ।
तथा 'नमः सिद्धिदाय' द्वितीयः खण्ड ईरितः ॥ १९
'स्वाहा' तृतीयः खण्डस्तु मन्त्रः पञ्चदशाक्षरः ।

ध्यानम्—

उत्सङ्गे गिरिजापतेः स्थितमजं स्वानन्दतेजोमयं
बालं सर्वगुणात्मकं गजमुखं पीताम्बरालंकृतम् ।
नानारत्नविभूषितं हरिहरब्रह्मादिभिः सेवितं
भक्ताभीष्टफलप्रदं हृदि भजे विघ्नेश्वरं सिद्धिदम् ॥ २०

अनेन मनुना विष्णो भज मे तनयं विभुम् ।
महामन्त्रो गणेशस्य सर्वसिद्धिप्रदायकः ॥ २१
अस्यानुष्ठानमात्रेण कार्यं ते सिद्धिमेष्यति ।
शिवं नत्वा हरिः पश्चात् पुरोभागे शिवस्य च ॥ २२
गणेशमूर्तिं संस्थाप्य पुपूजे विधिपूर्वकम् ।
ध्यायन् विनायकं देवं जजाप च महामनुम् ॥ २३
गते वर्षशते काले बालरूपी विनायकः ।
शिवोत्सङ्गगतो विष्णोर्दर्शनं प्रददौ विभुः ॥ २४
विष्णुर्नत्वा गणेशानं तुष्टुवे विधिपूर्वकम् ।

विष्णुः—

परब्रह्मरूपं चिदानन्दरूपं
निजानन्दसंस्थं परं ज्योतिरूपम् ।
सदा निर्विकारं च योगे रमन्तं
सदा बालविघ्नेशमाद्यं नमामि ॥ २५

महाबुद्धिनाथं महासिद्धिनाथं
निजानन्दलोके सदा खेलयन्तम् ।
मुदा मोदपूर्वैः सदा सेव्यपादं
सदा बालविघ्नेशमाद्यं नमामि ॥ २६
सदा शान्तियुक्तं च भूमास्वरूपं
भवोपाययोगैः समाधौ च लभ्यम् ।
सुसंयोगनैजेशमायामयं त्वां
सदा बालविघ्नेशमाद्यं नमामि ॥ २७
गणेशानलोके सदा वासशीलं
महादेवलोके गणैः सेव्यपादम् ।
शिवोत्सङ्गभागे मुदा खेलयन्तं
सदा बालविघ्नेशमाद्यं नमामि ॥ २८
गजोद्भूतमाद्यं शिवागर्भजातं
वरेण्यस्य पुत्रं महापर्श्वपुत्रम् ।
मुनीन्द्रस्य पुत्रं महाराजपुत्रं
सदा बालविघ्नेशमाद्यं नमामि ॥ २९
मुनीशानकेशादिदेवैः सुपूज्यं
महानन्दिसेनेशकालाग्निसेव्यम् ।
पराशक्तिवृन्दैः सदा सेव्यपादं
सदा बालनिघ्नेशमाद्यं नमामि ॥ ३०
पराशक्तिरूपं महाशंभुरूपं
महाविष्णुरूपं दिनेशानरूपम् ।
ग्रहेशानरूपं दिगीशादिरूपं
सदा बालविघ्नेशमाद्यं नमामि ॥ ३१
प्रधानस्वरूपं महत्तत्त्वरूपं
धरावारिरूपं नभोवायुरूपम् ।
महावह्निरूपं च चन्द्रादिरूपं
सदा बालविघ्नेशमाद्यं नमामि ॥ ३२

स्कन्दः—
इमं स्तोत्रराजं शिवापुत्रकस्य
सदा ये पठन्ते गणेशानभक्ताः ।

इह प्राप्य भोगान् मुदा दुर्लभांश्च
लभन्ते गणेशानपादं निजान्ते ॥ ३३
नत्वा हरिस्तदा प्राह दर्शनान्मम सिद्धयः ।
संभविष्यन्ति निर्विघ्नास्तथाप्येकं वदामि ते ॥ ३४
ममैव योगनिद्रान्ते श्रुतेर्मलसमुद्भवौ ।
ताभ्यामहं ततो युद्धं कृतवान् बहुवत्सरम् ॥ ३५
ततः क्षीणबलस्त्वाहं शरणं समुपागतः ।
अतो यथा तयोर्मत्तो वधः स्यात्तद्विचार्यताम् ॥ ३६
अन्येषामपि दैत्यानां जयेन यश उत्तमम् ।
देहि मे परमेशान भक्तिं ते ह्यनपायिनीम् ॥ ३७
यथा मे कीर्तिरतुला त्रैलोक्यं पावयिष्यति ।

गणेश उवाच—

यद्यत्ते प्रार्थितं विष्णो तत्तत्ते भविता ध्रुवम् ॥ ३८
यशो बलं परा कीर्तिरविघ्नश्च भविष्यति ।
एवमुक्त्वा महाविष्णुं तत्रैवान्तर्दधे विभुः ॥ ३९
तत आनन्दपूर्णोऽसौ मेने तावसुरौ जितौ ।
ततो जगाम स हरिर्यत्र तौ मधुकैटभौ ॥ ४०
दृष्ट्वा तौ हरिमायान्तं हासं निन्दां च चक्रतुः ।
मेघश्यामं मुखं तेऽद्य दर्शितं नौ कुतः पुनः ॥ ४१
आवां तु ते महामुक्तिं दास्यावोऽतः पुनः किल ।
लघुतां च प्रयातोऽसि किमर्थं रणमागतः ॥ ४२

हरिरुवाच—

सहसा दहते सर्वं लघुरेव हुताशनः ।
लघुर्दीपो महद्रात्रौ यथा संहरते तमः ॥ ४३
तथा वामहमद्यैव शक्तो नाशाय दुर्मदौ ।

स्कन्दः—

इति तस्य वचः श्रुत्वातिक्रुद्धौ मधुकैटभौ ॥ ४४
सहसा जघ्नतुर्विष्णुं मुष्टिभ्यां हृदये भृशम् ।
ततः पुनर्मल्लयुद्धं तयोस्तस्य व्यवर्धत ॥ ४५

युद्ध्वा बहुदिनं ताभ्यां वरं दातुं समुत्सुकः ।
उवाच श्लक्ष्णया वाचा हरिस्तौ मधुकैटभौ ॥ ४६
मम प्रहारान् हि युवां सहेथे बहुलाः समाः ।
युवां वै पुरुषार्थेन संयोक्ष्ये दैत्यपुंगवौ ॥ ४७
युवयोः सदृशौ नैव संभूतौ न भविष्यतः ।

तावूचतुः—

अस्मत्तस्त्वं वरान् ब्रूहि दास्यावस्तान् हरे बहून् ॥ ४८
आवां हि तव युद्धेन सन्तुष्टौ च भृशं त्वयि ।

स्कन्दः—

तयोर्वचनमाकर्ण्य मायामोहितयोर्हरिः ॥ ४९
श्रुत्वा बभाण दैत्यौ मे वरान् दातुं समुद्यतौ ।
तदा मे वध्यतां यातं वर एष वृतो मया ॥ ५०
तदा सर्वं जलमयं दृष्ट्वा तौ मधुकैटभौ ।
ऊचतुः परमप्रीतौ तव हस्तान्मृतिः शुभा ॥ ५१
अन्ते त्वच्चिन्तनात् सद्यो मुक्तिं यान्ति सनातनीम् ।
यत्र नोर्वी जलमयी तत्र नौ जहि माधव ॥ ५२
सर्वं त्यजावो नो सत्यं सत्ये सर्वं प्रतिष्ठितम् ।

स्कन्दः—

तयोरित्थं वचः श्रुत्वा जघने तौ दधार ह ॥ ५३
चक्रेण क्षुरधारेण चिच्छेद शिरसी तयोः ।
ततो देवा मुमुदिरे ववर्षुः कुसुमानि च ॥ ५४
ततस्तु विष्णुरभ्येत्य सर्वं ब्रह्माणमैरयत् ।
ततः क्षीराब्धिमगमद्योगनिद्रां चकार सः ॥ ५५
य इदं शृणुयान्नित्यं माहात्म्यं पापनाशनम् ।
कस्मादपि भयं न स्याल्लभते सर्वकामितम् ॥ ५६

॥ इति श्रीदक्षिणकुटीद्वीपक्षेत्रमाहात्म्ये बालविनायकप्रसादान्मधुकैटभवधो नाम त्रयोविंशोऽध्यायः ॥

## ॥ अथ चतुर्विंशोऽध्यायः [मदालसावत्सराजपरिणयः] ॥

सनत्कुमारः—

श्रीदक्षिणकुटीद्वीपे स्थलेऽस्मिंल्लोकनायिकाम् ।
कः समाराध्य किं प्राप तद्ब्रूहि शिवनन्दन ॥ १

स्कन्द उवाच—

हेहयस्य च वंशे तु नृपोऽभूच्च प्रतर्दनः ।
प्रतर्दनो महावीरः सार्वभौमः प्रतापवान् ॥ २
माहिष्मत्यां स्वयं स्थित्वा विन्ध्यस्योत्तरभागके ।
गङ्गान्तं विस्तृतं राज्यं पालयामास धर्मवान् ॥ ३
तस्य पुत्रो महानासीत् सर्वसद्गुणराजितः ।
रूपवान् बुद्धिमान् विद्वान् धर्मवान् द्विजभक्तिमान् ॥ ४
यौवराज्याभिषेकं च संप्राप पितृशासनात् ।
पालयामास धर्मात्मा द्विजदेवप्रतोषकः ॥ ५
सिद्धाश्रमनिवासास्तु नानायज्ञपरायणाः ।
शतानन्दमुखाः श्रेष्ठा ऋषयो यज्ञतत्पराः ॥ ६
कदाचित्ते नृपसभां गत्वाशीर्वादपूर्वकम् ।
प्रतर्दनं च संप्राहुः पूजितास्तेन मानिताः ॥ ७

ऋषयः—

वयं सिद्धाश्रमे सुस्था नानायज्ञपरायणाः ।
प्रारब्धे च मखेऽस्माभिर्नाम्ना वाराहकेतुकः ॥ ८
दानवेन्द्रो दानवैश्च राक्षसैश्चापि संयुतः ।
समागत्याश्रमपदं यज्ञनाशं करोति च ॥ ९
अतस्त्वं वै समागत्य यज्ञसिद्धिं च कारय ।

स्कन्दः—

एवं मुनिवचः श्रुत्वा तानाहायं प्रतर्दनः ॥ १०
अयं वत्सो मम सुतो बलवीर्यसमन्वितः ।
युष्माभिश्च समागत्य कुर्याद्वै यज्ञरक्षणम् ॥ ११
एवमुक्त्वा तु तैः साकं प्राहिणोच्च सुतं नृपः ।
वत्सो नृपो वीरवरो दिव्याभरणभूषितः ॥ १२
नानायुधधरो भूत्वा शरचापविराजितः ।
दिव्यमश्वं समारुह्य तैश्च साकं ययौ मुदा ॥ १३

सिद्धाश्रमं च ते गत्वा नृपपुत्रस्य शासनात् ।
प्रारेभिरे मखं सर्वे ऋषयश्च यथाविधि ॥ १४
शरचापधरो वत्सः समन्तादाश्रमस्य सः ।
सञ्चरंस्तुरगे स्थित्वा यज्ञविघ्नार्थमागतान् ॥ १५
दैत्यांश्च राक्षसांश्चापि लीलयैव जघान सः ।
समाप्तिदिवसे दैत्यनायको मायिनां वरः ॥ १६
वराहकेतुर्दुष्टात्मा वाराहं रूपमास्थितः ।
विवेश यज्ञवाटं स मुनिभिश्च प्रचोदितः ॥ १७
हन्तुं कृत्वा च टंकारं शरं योक्तुं प्रचक्रमे ।
श्रुत्वा टंकारशब्दं तु सभयो दानवैः खलः ॥ १८
धावमानो ययौ वेगान्नृपोऽपि मुनिचोदितः ।
अन्वधावच्च तं वेगात् स दैत्यस्त्वरयान्वितः ॥ १९
पातालस्य बिलद्वारे पपातायं नृपस्तदा ।
वज्रास्त्रेणैव तं दैत्यं जघान क्षणमात्रतः ॥ २०
बिलद्वारं प्रविश्यैव वत्सस्तत्र मृतं खलम् ।
वराहकेतुं दैत्येन्द्रं पुरं तत्र महोमयम् ॥ २१
सुवर्णरत्नखचितं दृष्ट्वाश्चर्ययुतोऽभवत् ।
सालस्यान्तर्ययौ वीरो राक्षसान् सालपालकान् ॥ २२
निहत्य सालमध्यस्थं प्रासादं रत्ननिर्मितम् ।
विचित्रशोभासंयुक्तं ददर्श नृपनन्दनः ॥ २३
प्रासादद्वारदेशं तु गत्वा तत्र स्थितान् खलान् ।
प्रासादरक्षकान् दैत्यानवधीत् सायकैर्वरैः ॥ २४
प्रासादान्तर्ययौ वत्सो मञ्चे रत्नविनिर्मिते ।
उपविष्टां सखीभ्यां च कन्यामेकां ददर्श सः ॥ २५
रतिकोटिसमाकारां युवतीं चारुहासिनीम् ।
दृष्ट्वा विस्मितचित्तोऽभूत् कन्या दृष्ट्वा तु तं नृपम् ॥ २६
अन्तर्विवेश हर्षेण सखी चैका तु सुन्दरी ।
आगत्य तं यथान्यायं पुपूजासनपूर्वकैः ॥ २७
तदा नृपं सा पप्रच्छ को देशस्ते किमर्थयन् ।
त्वमागतोऽसि पातालं दुर्निरीक्ष्यं सुरेश्वरैः ॥ २८

क्षिप्रं याहि स्वदेशं त्वं नो चेत्त्वं दैत्यपेन च ।
वराहकेतुना सत्यं प्राप्स्यसे मरणं ध्रुवम् ॥ २९
एवं सखीवचः श्रुत्वा तामाह नृपनन्दनः ।

वत्स उवाच—

महिष्मतीनरपतेः सुतोऽहं वत्सनामवान् ॥ ३०
पितुश्च शासनादेव सिद्धाश्रमनिवासिनाम् ।
मुनीनां यज्ञरक्षार्थमागतस्तत्र राक्षसान् ॥ ३१
विघ्नार्थमागतान् हत्वा वाराहं रूपमाश्रितम् ।
पलायमानं दैत्येन्द्रं नाम्ना वाराहकेतुकम् ॥ ३२
अनुसृत्यागतश्चाहं बिलेऽस्मिन् दानवाधमम् ।
निहत्य सालरक्षांश्च प्रासादस्यापि रक्षकान् ॥ ३३
अहनं संप्रविष्टोऽहं प्रासादं दैवयोगतः ।
यूयं सर्वाः किमर्थं च निवासं कुरुथात्र वै ॥ ३४
कस्य पुत्र्यः कस्य भार्याः सर्वं ब्रूत ममाग्रतः ।
एवं तस्य वचः श्रुत्वा प्राह तं यक्षकन्यका ॥ ३५

यक्षिण्युवाच—

विश्वावसुस्तु गन्धर्वश्चित्ररस्तस्य तु नन्दनः ।
चित्रस्य तनया कन्या सर्वलक्षणलक्षिता ॥ ३६
सर्वसद्गुणसंपन्ना देवीभक्तिसमन्विता ।
वराहकेतुर्दैत्येशः पुरस्यास्य पतिः प्रभुः ॥ ३७
चित्रं जित्वा तस्य पुत्रीं युवतीं तां मदालसाम् ।
समानीयात्र संस्थाप्य तस्याः शुश्रूषणाय च ॥ ३८
यक्षिण्यौ नौ समानीय स्थापयामास चात्र वै ।
वत्सरत्रयपर्याप्तं व्रतमुक्त्वा मदालसा ॥ ३९
उपासनं पराशक्तेश्चकार नियमान्विता ।
स्वप्ने तस्याः प्रसन्नाम्बा कश्चिद्वै राजपुत्रकः ॥ ४०
वर्षान्ते तं दैत्यपतिं हत्वात्र मम शासनात् ।
आगच्छेत् स तु ते भर्ता परत्रेह सुखप्रदः ॥ ४१
इत्युक्त्वा तु तिरोऽभूत् सा प्रतीक्ष्य त्वां वयं स्थिताः ।
हतोऽसौ च त्वया दैत्यो नाम्ना वाराहकेतुकः ॥ ४२

मदालसा त्वया ग्राह्या विधिपूर्वं न संशयः ।
ततो मदालसा देवी रतिकोटिसमप्रभा ॥ ४३
सर्वाभरणशोभाढ्या सर्वलक्षणलक्षिता ।
आगत्य पार्थिवसुतं ववन्दे भक्तिसंयुता ॥ ४४
हस्तौ च संपुटीकृत्य प्रार्थयामास तं नृपम् ।

मदालसा—

अहं ते वशगा राजन् भार्यार्थं मां गृहाण भो ॥ ४५
एवं तस्या वचः श्रुत्वा तामाह नृपसत्तमः ।
गन्धर्वकन्या त्वं देवी गुणरूपसमन्विता ॥ ४६
मदीयपूर्वपुण्येन मम भार्या समागता ।
ब्रह्माण्डे स्त्रियमन्यां न ग्रहीष्यामि कदाचन ॥ ४७
एकदारव्रतपरो भविष्यामि न संशयः ।
मम प्राणमयी त्वं तु सत्यमेतन्न संशयः ॥ ४८
अरुन्धत्यनसूयाभ्यां पातिव्रत्येन विष्टपे ।
यास्यामि तुल्यतां सत्यमित्याह च मदालसा ॥ ४९
तत्र स्थित्वा दिन पञ्चाद्यक्षिण्योः स्वस्थलं ततः ।
गन्तुमाज्ञां ददौ राजा ते च विज्ञाप्य जग्मतुः ॥ ५०
मदालसायुतो वत्सः स्वराष्ट्रं प्राप हर्षितः ।
नत्वा च पितरौ भक्त्या जातं वृत्तं न्यवेदयत् ॥ ५१
तयोर्विवाहं विधिवत् कारयामास तत्पिता ।
मदालसायुतो वत्सो राष्ट्रमाशिषदुत्तमम् ॥ ५२
मदालसागुणेनैव वृत्तेन श्वशुरौ ततः ।
मदालसासक्तचित्तौ सर्वदा संबभूवतुः ॥ ५३
पातिव्रत्यगुणेनैव वृत्तेन च मदालसा ।
पतिं गुरून् राष्ट्रसंस्थान् जनांश्च समतोषयत् ॥ ५४
मदालसायुतो वत्सो द्वादशाब्दान् सुखेन च ।
अवात्सीत्तोषयन् सर्वान् मुनीनपि वनस्थितान् ॥ ५५

॥ इति श्रीदाक्षिणकुटीद्वीपक्षेत्रमाहात्म्ये मदालसावत्सराजपरिणयो नाम चतुर्विंशोऽध्यायः ॥

## ॥ अथ पञ्चविंशोऽध्यायः [मदालसाज्वलनप्रवेशः] ॥

स्कन्दः—

वराहकेतोरनुजो वृककेतुरिति स्मृतः ।
शाकद्वीपनिवासी तु द्रष्टुं ज्येष्ठं समाययौ ॥ १
वत्सो हेहयदेशेशो युद्धे हत्वा च दानवान् ।
वराहकेतुं दैत्येन्द्रं तेनानीतां मदालसाम् ॥ २
गृहीत्वा तां विधानेन तस्या भोगं मुदा सदा ।
स निर्विशति चैवेति वृत्तं शुश्राव दानवात् ॥ ३
मदालसाभोगहीनं कर्तुं वत्समियेष सः ।
ततोऽयं मायया दैत्यो मुनिवेषं दधार च ॥ ४
नृपस्य स सभां गत्वा तमाह नृपतिं खलः ।

दैत्यः—

प्रतर्दन नृपश्रेष्ठ सार्वभौमोऽसि विष्टपे ॥ ५
नर्मदाया जले मग्नो भूत्वाहं दिनसप्तकम् ।
तपः कर्तुं च वाञ्छामि तदा मे रक्षणाय च ॥ ६
प्रेरय त्वं तव सुतं सर्वदैत्यनिबर्हणम् ।
तच्छ्रुत्वा प्राहिणोत् पुत्रं वत्सो वीरपराक्रमः ॥ ७
नत्वा च पितरौ भक्त्या विज्ञाप्य च मदालसाम् ।
अश्वं स्वं च समारुह्य तेन साकं ययौ मुदा ॥ ८
कपटी दानवमुनिर्नर्मदां प्राप्य हृष्टधीः ।
स्थित्वा त्वमापगातीरे कुरु मे रक्षणं नृप ॥ ९
मग्नो भूत्वा जलस्यान्तर्धरास्थो योगवैभवात् ।
करोम्यहं तपो घोरमिति तं प्रावदत्तदा ॥ १०
जलस्यान्तर्मायया ये ह्यागच्छेयुश्च मायिनः ।
तेषां भयोत्पादनार्थं देहि मे मुद्रिकां तव ॥ ११
तपोऽन्ते बहिरागत्य तुभ्यं दास्ये न संशयः ।
एवं प्रोक्तो नृपसुतो मुद्रिकां तत्करे ददौ ॥ १२
मुनिवेषधरो दैत्यो वत्सस्यानुमतेन च ।
नर्मदायाः प्रवाहे तु मग्नोऽभून्मायिनां वरः ॥ १३
तटे स्थित्वा तस्य रक्षां कुर्वन्नासीन्नृपात्मजः ।

दिनत्रयात् परं दैत्यो पूर्ववन्मुनिवेषधृत् ॥ १४
तुरीयदिवसे राजसभां प्राप च मायिकः ।
रुदन्नृपकरे दत्त्वा मुद्रिकां तां जगाद च ॥ १५

दैत्यमुनिः—

मयि स्थिते तु तपसि वृककेतुर्महाबलः ।
वराहकेतोरनुजः समागत्य च दानवैः ॥ १६
भ्रातुर्वधं तु संस्मृत्य युयुधे तनयेन ते ।
मायावी बलवान् दैत्यो जघान तव पुत्रकम् ॥ १७
ततोऽहं दुःखितो भूत्वा गृहीत्वा तस्य मुद्रिकाम् ।
दुःखं चैतत्त्वयि नृप निवेदयितुमागतः ॥ १८
बालस्य मरणे चाहं हेतुभूतोऽस्मि पातकी ।
इत्युक्त्वा च निपत्योर्व्यां लुलुण्ठ प्रलपन् खलः ॥ १९
नृपो भूम्यां पतित्वा च रुरोद भृशदुःखितः ।
मन्त्रिपूर्वाश्च सर्वेऽपि प्रालपंस्तस्य सद्गुणान् ॥ २०
रुरुदुर्मस्तके सर्वे ताडयन्तोऽतिदुःखिताः ।
राज्ञीपूर्वाः स्त्रियः सर्वास्ताडयन्त्यश्च वक्षसि ॥ २१
मस्तके चापि रुरुदुः श्रुत्वा देवी मदालसा ।
विलप्य बहुधा पश्चाद्धैर्येण नृपतिं ययौ ॥ २२
उवाच श्वशुरं सा तु मम भर्ता महाबलः ।
क्षत्त्रधर्मेण निहतो युद्धे वै माययासुरैः ॥ २३
लभेत वीरस्वर्गं स तत्रायं मां विना सुखम् ।
नाप्नुयात्तेन तत्रापि वस्तुमाज्ञां प्रदेहि मे ॥ २४
प्राग्निं ज्वालय राजेन्द्र प्रविश्याह हुताशनम् ।
भर्तुश्च निकटं सत्यं गमिष्यामि तवाज्ञया ॥ २५
एवं स्नुषावचः श्रुत्वा तथा कर्तुं नृपोत्तमः ।
ददावाज्ञां वह्निकुण्डे पपात च मदालसा ॥ २६
दुःखद्वययुताः सर्वे बभूवुः शोकसंयुताः ।
ततः परं दैत्यमुनिर्मायया तां तु मुद्रिकाम् ॥ २७
गृहीत्वा नर्मदातोये प्रविश्य दिवसेऽष्टमे ।
उत्थाय हर्षयुक्तश्च मुद्रिकां नृपपुत्रके ॥ २८

दत्त्वाशिषं स दैत्येन्द्रो मायया स्वस्थलं ययौ ।
मुनेश्च शासनादेव वत्सोऽयं नृपपुत्रकः ॥ २९
अश्वेन च ययौ राज्यं राष्ट्रं शोभाविवर्जितम् ।
शोकार्णवे निमग्नं च दृष्ट्वा भयसमन्वितः ॥ ३०
प्रासादं प्रविवेशासौ ननाम पितरौ तदा ।
आलिङ्ग्य पुत्रं नृपतिर्जातं वृत्तं न्यवेदयत् ॥ ३१
मदालसामृतिं श्रुत्वा निपपात धरातले ।
शोकसंविग्नहृदयो मूर्च्छां प्राप ततः परम् ॥ ३२
शतानन्दमुखाज्जातं जज्ञे च नृपनन्दनः ।
आलम्ब्य धैर्यं स मुनिं दैत्यं ज्ञात्वा वधाय च ॥ ३३
शाकद्वीपं ततो गत्वा दिव्याश्वैर्वृककेतुना ।
युद्धं कृत्वा च तं हत्वा परांस्तस्यानुयायिनः ॥ ३४
तत्र स्थितान् दानवांश्च जघान जयसंयुतः ।
संप्राप्य राज्यं स्वं वत्सो विश्वस्तेषु च मन्त्रिषु ॥ ३५
न्यस्य नानाराजपुत्रान् समानीय स्वराज्यकम् ।
नृत्तगानकथावाद्यालापैः कालं निनाय च ॥ ३६
सर्वान्नृपसुतान् सम्यक् तोषयामास सादरम् ।
एवं वर्षत्रयं जातं कदाचिच्छङ्खपुत्रकौ ॥ ३७
नागौ पातालभुवनाद्भूलोकं समुपागतौ ।
वत्सस्य गोष्ठीं श्रुत्वा च नृपपुत्रस्वरूपिणौ ॥ ३८
वत्सेन मानितौ भूत्वा निवासं तत्र चक्रतुः ।
वत्सस्य मुख्यमित्रे तौ सञ्जातौ च क्रमेण वै ॥ ३९
द्वादशाब्दात् परं तौ तु विज्ञाप्य नृपपुत्रकम् ।
पातालभुवनं गत्वा नेमतुः पितरं मुदा ॥ ४०
वत्सस्य सद्गुणान् वृत्तं स्वात्मनोश्चापि मित्रताम् ।
उक्त्वा गन्तुमनुज्ञां च प्रार्थयामासतुश्च तौ ॥ ४१
आश्चर्यसंयुतः शङ्खः पितरौ त्यज्य पुत्रकौ ।
भूलोके वत्सपार्श्वे तु वस्तुं गन्तुं च वाञ्छथः ॥ ४२
आश्चर्यं भाति चैतत्तु ब्रूतं कारणमद्य मे ।
एवं श्रुत्वा पितुर्वाक्यं प्राहतुर्नागपुत्रकौ ॥ ४३

आवयोर्न्यस्य तान् प्राणान् स तिष्ठति नृपात्मजः ।
पुत्रात् कोटिगुणं नित्यं नौ पोषयति भक्तिमान् ॥ ४४
तादृशं तं तु सन्त्यज्य नेच्छावो वस्तुमत्र वै ।
एवं पुत्रवचः श्रुत्वा तस्मिन् प्रीतिं च पुत्रयोः ॥ ४५
ज्ञात्वा तस्योपकारं स कर्तुमिच्छंश्च नागराट् ।
तुष्टो भवेन्नृपसुतः केन दानेन पुत्रकौ ॥ ४६
इति पप्रच्छ पितरं प्राहतुः पुत्रकौ तदा ।
मदालसा तस्य भार्या गुणरूपसमन्विता ॥ ४७
मायाकृत्येन दैत्यस्य प्रविश्य च हुताशनम् ।
स्वर्गं लेभे विना तां तु मित्रमन्यन्न वाञ्छति ॥ ४८
इत्युक्त्वा जग्मतुस्तौ च तेन वासं प्रचक्रतुः ।
मदालसां पूर्वरूपवयोगुणसमन्विताम् ॥ ४९
सुतां प्राप्तुं नागराजो भूलोकं समुपागमत् ।
भ्रमन् वने दण्डके तु वासिष्ठाश्रममाययौ ॥ ५०
तत्र दृष्ट्वा वसिष्ठं तु ववन्दे भावपूर्वकम् ।
स्वाभीष्टासिद्धये मार्गमुपायं मुनिसत्तमम् ॥ ५१
पप्रच्छ विनयेनैव वसिष्ठो ब्रह्मवित्तमः ।
शिवेन सहितां देवीं ध्यात्वा तं प्रावदत्तदा ॥ ५२

इति श्रीदक्षिणकुटीद्वीपक्षेत्रमाहात्म्ये मदालसाज्वलनप्रवेशो नाम पञ्चविंशोऽध्यायः ॥

## ॥ अथ षड्विंशोऽध्यायः [शङ्खपालतपःसिद्धिः] ॥

वसिष्ठः—

नागेन्द्र शङ्खपालाख्य तव कार्यसुसिद्धये ।
आदिशक्तिं स्वतन्त्रां त्वं भज भावपुरःसरम् ॥

शङ्खः—

आदिशक्तिः कथं जाता कीदृग्भूता वदस्व मे ।

वसिष्ठः—

सूर्ये प्रभा यथा तद्वत् सा तु ब्रह्मणि संस्थिता ॥

भिन्नाभिन्नमयी शक्तिः परे ब्रह्मणि संस्थिता ।
व्यवहारे तु सा भिन्ना कथ्यते निगमेषु च ॥ ३
ब्रह्म ब्रह्मेति यत् प्रोक्तं संस्थितं स्वे महिम्नि तत् ।
सगुणं निर्गुणं चेति द्विभावरहितं त्विति ॥ ४
एकमेव परं ब्रह्म वर्ण्यते योगसिद्धये ।
चतुर्विधजगद्रूपं सगुणं ब्रह्म तत् स्मृतम् ॥ ५
जीवेश्वरस्वरूपेण तदेव च विहारकम् ।
प्रकाशकं विहाराणां ज्ञानरूपं तु निर्गुणम् ॥ ६
अभेदे खेलकं यत्तु स्वस्वरूपं तदीरितम ।
ओंकारब्रह्म सगुणं तुर्यातीतस्वरूपकम् ॥ ७
बिन्दुमात्रोपाधियुता गुणशान्तिस्वरूपिणी ।
गुणवासनया युक्ता मूलमायेति कथ्यते ॥ ८
सृष्ट्यादौ सा ततः पूर्वं लीलार्थं नादरूपिणी ।
सञ्जाता च तदा सा तु शुद्धमायेति कथ्यते ॥ ९
विद्येति कथ्यते तन्त्रे वेदान्ते योगशास्त्रके ।
शुद्धसत्त्वप्रधानं स्यात्तद्गतं ब्रह्म केवलम् ॥ १०
प्राधान्ये च चिदंशस्य शिव इत्यभिधीयते ।
मायांशस्य तथाभावाच्छक्तिरित्यभिधीयते ॥ ११
शक्तेर्जाता ह्यविद्या तु सत्त्वे मालिन्यसंयुता ।
अविद्यया युतो जीवः क्षेत्रज्ञ इति कथ्यते ॥ १२
तमोगुणप्रधानं तु तस्माज्जातं ततः परम् ।
तमोगुणप्रधाना तु प्रकृतिर्जडरूपिणी ॥ १३
क्षेत्रज्ञः पुरुषो वेदे प्रकृतेः पर उच्यते ।
पुरुषाच्च परः शम्भुः परमेशः स्वतन्त्रकः ॥ १४

ऋतं पिबन्तौ सुकृतस्य लोके
गुहां प्रविष्टौ परमे परार्धे ।
छायातपौ ब्रह्मविदो वदन्ति
पञ्चाग्नयो ये च त्रिणाचिकेताः ॥ १५

द्वा सुपर्णा सयुजा सखाया
समानं वृक्षं परिषस्वजाते ।

तयोरन्यः पिप्पलं स्वाद्वत्ति
अनश्नन्नन्यो अभिचाकशीति ॥ १६
विद्याविद्यामयीं मायां तुरीयां समुपाश्रितौ ।
जीवेश्वराविति प्रोक्तौ मोहितो जीव उच्यते ॥ १७
मोहहीनः शिवः प्रोक्त इति शास्त्रस्य निश्चयः ।
जडविश्वमयी माया समष्ट्यात्मसमायुतः ॥ १८
ईश्वरश्चेति कथितो मोहहीनप्रभावतः ।
व्यष्टिर्जीव इति प्रोक्तो देहमोहसमन्वितः ॥ १९
एवं भावद्वययुतं विश्वेषु च विहारकम् ।
जीवस्य भोगदानार्थं परमात्मा परः शिवः ॥ २०
प्रकृत्या जनयत्येव व्याकृतं त्रिविधं जगत् ।
गुणत्रयविहीनोऽयं परमात्मा गुणेश्वरः ॥ २१
प्रधानक्षेत्रज्ञपतिर्गुणेश इति कथ्यते ।
परा शिवस्य या शक्तिः सा पराशक्तिरुच्यते ॥ २२
आदिकल्पे गुणेभ्यश्च भिन्नेभ्यश्च तदीक्षणात् ।
ब्रह्मविष्णुमहेशांश्च सृजते परमेश्वरः ॥ २३
तथा गौरीं महालक्ष्मीं विद्यारूपां सरस्वतीम् ।
पराशक्तिस्तु सृजते वेदशास्त्रप्रमाणतः ॥ २४
अतो वै परमा शक्तिः कथ्यते लोकनायिका ।
लोकमाता परा शक्तिः पिता शंभुरिति स्मृतः ॥ २५
शक्त्या युक्तः शिवः शक्तो जगतां सर्जनादिषु ।
शक्तौ भक्तियुताः शाक्तास्ते मातृप्रीतिसंयुताः ॥ २६
शिवे भक्तियुताः शैवाः पितृभक्तियुताश्च ते ।
पितुश्चापि प्रीतियुता माता पुत्रेषु विष्टपे ॥ २७
मातृप्रसादः सुलभः पुत्राणां च भवेद्ध्रुवम् ।
अतस्त्वं मातृभक्त्याढ्यो माता वै लोकनायिका ॥ २८
अस्मिन् स्थले परा शक्तिः कथिता लोकनायिका ।
एकाक्षर्या विद्यया तां भज भावपुरस्सरम् ॥ २९
क्षिप्रं प्रसन्ना सा देवी दद्यात्ते वाञ्छितं ध्रुवम् ।

स्कन्दः—

एवमुक्त्वा मुनीशानस्तस्मै मन्त्रमुपादिशत् ॥ ३०

सनत्कुमारः—

एकाक्षरीं शक्तिविद्यां कृपया वद षण्मुख ।

स्कन्दः—

एकाक्षर्याः पराशक्तेर्ब्रह्मा वै ऋषिरुच्यते ॥ ३१
छन्दस्तु निच्छृद्गायत्री देवता भुवनेश्वरी ।
ओं बीजमेवं ह्रीं शक्तिर्न्यासा ह्रीपूर्वकैः स्मृताः ॥ ३२

ध्यानम् —

पीयूषाम्बुधिमध्यगे मणिमये द्वीपे महामण्टपे
नानाशक्तिशिरोधृते कमलके सिंहासने संस्थिताम् ।
रक्तां रत्नविभूषितां शिवयुतां पाशाङ्कुशौ पङ्कजं
चिन्मुद्रामपि धारिणीं निजकरैर्लोकेश्वरीं भावये ॥ ३३
तारेण सहितः शक्तिबीजो मन्त्र उदीरितः ।
त्रिकोणे बिन्दुमध्यस्थतारके शक्तिबीजकम् ॥ ३४
सरस्वतीमहालक्ष्मीगौरीबीजास्त्रिकोणके ।
विघ्नेशमारकेशानां भानोर्बीजा यथाक्रमम् ॥ ३५
कोणेषु षट्सु कथितास्ततो वसुदलेषु च ।
श्रीलक्ष्मीरौबला षष्टी चाम्बिका गौर्जया तथा ॥ ३६
इन्द्रसेना च वेदे वै अष्टौ शक्तय ईरिताः ।
कथिताः षोडशदलेष्वासां बीजा यथाक्रमम् ॥ ३७
महासिद्धिर्महाबुद्धिर्महापुष्टिश्च कालिका ।
महादुर्गा राधिका च लक्ष्मीर्भूमी रतिस्तथा ॥ ३८
गायत्री चापि सावित्री प्रभा चैव सरस्वती ।
गौरीवल्लीदेवसेनाः प्रोक्ताः षोडश शक्तयः ॥ ३९
आसां बीजाः षोडशारे वृत्ते वै मातृकाक्षराः ।
पाशाङ्कुशौ भूपुरेषु सिद्धयो मातरस्तथा ॥ ४०
दिगीश्वराश्च संलेख्या बीजरूपा यथाक्रमम् ।
एवं मन्त्रो मया प्रोक्तो लोकेश्वर्याः क्रमेण च ॥ ४१
एवं ज्ञात्वा पराशक्तेः स्वरूपं शङ्खपालकः ।
क्षेत्रेऽस्मिंस्तु पराशक्तेः स्थित्वायं सन्निधौ क्रमात् ॥ ४२

संपूज्य परमां शक्तिं जपन् मन्त्रं विधानतः ।
तपश्चक्रे निराहारो वर्षमात्रं तु नागराट् ॥ ४३
दिव्यं रथं समास्थाय दर्शनं प्रददौ शिवा ।
नत्वा सूक्तेन तां देवीं तुष्टुवे नागराट् तदा ॥ ४४

शङ्खः—

पीयूषाम्बुधिमध्यगे मणिमये ज्योतिर्मये द्वीपके
रत्नस्तम्भसहस्रकैश्च लसिते सन्मण्टपे प्रोज्ज्वले ।
धर्माधर्ममुखैर्हरीश्वरवरैः सिंहासने शोभिते
देवीं शङ्करवल्लभां श्रुतिनुतां लोकेश्वरीं भावये ॥ ४५

ज्योतीरूपसमन्वितां गिरिसुतां रक्ताम्बरां सुन्दरीं
पाशाभीतिवरान् सृणिं युगभुजैः संधारयन्तीं शिवाम् ।
चिन्तारत्नविभूषितां त्रिनयनां चन्द्रार्धचूडोज्ज्वलां
देवी शङ्करवल्लभां शिवसतीं लोकेश्वरीं भावये ॥ ४६

रुद्रं केशवमब्जजं निजदृशा सृष्ट्वा च तेषां क्रमात्
सृष्टिं पालननाशने च कमलां वाणीं ददौ कालिकाम् ।
लोकान् या प्रददौ पुरा निजदृशा भूम्यादिकांस्तां परां
देवीं शङ्करवल्लभां शिवसती लोकेश्वरीं भावये ॥ ४७

आधिव्याधिमुखैश्च दानववरैः संपीडिते विष्टपे
भूम्यां दक्षसुता बभूव विधिना संप्रार्थिता या परा ।
हत्वा चाधिमुखान् दितेश्च तनयान् सोमेश्वरं याप तां
देवी शङ्करवल्लभां शिवसतीं लोकेश्वरीं भावये ॥ ४८

सिन्धुं दैत्यपतिं दिनेशतनयं नानावरैर्गर्वितं
लोकानामपि पीडकं सुरवरान् कारागृहे स्थापकम् ।
उत्पाद्यैव सुतं गुणेशमनघं यानाशयत्तेन तां
देवीं शङ्करवल्लभां शिवसतीं लोकेश्वरीं भावये ॥ ४९

भण्डं दैत्यपतिं गजेन्द्रतनयं मारांशजं पापिनं
वीर्यस्यैव सुभक्षकं हृदि मुदा स्थित्वा जनानां सदा ।
आविर्भूय हुताशनाद्रथवरे स्थित्वावधीद्या तु तां
देवीं शङ्करवल्लभां शिवसतीं लोकेश्वरीं भावये ॥ ५०

लोके पर्वतनायकस्य तनया भूत्वा सुरैरर्थिता
दैत्यान् शुंभमुखान् जघान समरे शम्भुं पतिं प्राप्य या ।
भक्तानुग्रहमातनोति मुदिता या तां शिवां पार्वतीं
देवीं शङ्करवल्लभां शिवसतीं लोकेश्वरीं भावये ॥ ५१

दैत्यं लोकसुपीडकं च महिषं तेजोद्भवा या परा
सिंहं वाहनमास्थिता रणतले हत्वा स्वयं लीलया ।
भक्तानुग्रहमातनोति सुरपैर्दुर्गा तु तां सिद्धिदां
देवीं शङ्करवल्लभां शिवसतीं लोकेश्वरीं भावये ॥ ५२

स्कन्दः—

शक्तेः स्तोत्रमिदं महाहिरचितं यो वा पठेत् प्रत्यहं
ध्यात्वा भावपुरस्सरं हृदयके स्थित्वा शिवासन्निधौ ।
संप्राप्येह सुतान् धनस्य निचयं भुक्त्वा च भोगान् वरान्
शक्तेर्लोकमतीव दुर्लभतरं संप्राप्नुयान्निश्चितम् ॥ ५३

॥ इति श्रीदक्षिणकुटीद्वीपक्षेत्रमाहात्म्ये शङ्खपालतपस्सिद्धिर्नाम षड्विंशोऽध्यायः ॥

---

॥ अथ सप्तविंशोऽध्यायः [मदालसासंयोगः] ॥

स्कन्दः—

स्तुत्या च तपसा भक्त्या पराशक्तिः कृपान्विता ।
उवाच नागराजं तं वरान् वृणु हृदि स्थितान् ॥ १
दास्ये तुभ्यं न सन्देहो दुर्लभान् भुवनत्रये ।
सन्तुष्टो नागराजस्तां प्रार्थयामास सादरम् ॥ २

शङ्खः—

वत्सराजप्रिया भार्या सर्वसद्गुणराजिता ।
मदालसा दानवस्य कपटेन हुताशनम् ॥ ३
प्रविष्टा भस्मसाज्जाता पतिदुःखेन दुःखिता ।
वह्निप्रवेशकाले सा यावद्रूपवयोऽन्विता ॥ ४
यादृशैर्भूषणैर्वस्त्रैर्भूषिता परमेश्वरि ।
तथैव तामिदानीं मे सुतां देहि कृपावशात् ॥ ५

स्कन्दः—

तच्छ्रुत्वा विस्मिता शक्तिस्तथा सृष्ट्वा च तां तदा ।
शङ्खस्य तनयां दत्त्वा तत्क्षणाच्च तिरोऽभवत् ॥ ६
मदालसा तु पितरं तं मेने प्रीतिपूर्वकम् ।
तया ययौ च पाताले स्वगेहं भृशहर्षितः ॥ ७
जातं वृत्तं तु भार्यायै प्राह पुत्रीं ददौ ततः ।
मदालसा नागकन्या भूत्वा वासं चकार ह ॥ ८
शङ्खस्य तनयौ दैवाद्द्रष्टुं स्वपितरौ तदा ।
वत्सं विज्ञाप्य संप्राप्तौ भगिनीं तु मदालसाम् ॥ ९
दृष्ट्वा वृत्तं पितृमुखाच्छ्रुत्वा हर्षमवापतुः ।
पितुश्च शासनादेव दातुं वत्साय तां मुदा ॥ १०
वत्सस्य निकट गत्वा तयोर्ज्येष्ठोऽवदच्च तम् ।

नागः—

वत्स मित्र तव स्नेहाद्वत्स्यावस्तव वेश्मनि ॥ ११
बहुकालं न सन्देहः सन्त्यज्य पितरावपि ।
मद्गृहं त्वं समागत्य भुक्त्वा किञ्चिज्जलं फलम् ॥ १२
दीयमानं तु पित्रा मे गृहीत्वा प्रीतिपूर्वकम् ।
आयास्यामस्तथा त्वं तु कुरु मे प्रीतयेऽधुना ॥ १३
अङ्गीचकार तद्वाक्यं मत्वा तौ नृपपुत्रकौ ।
ततो रथं समारुह्य त्रयस्ते नर्मदातटम् ॥ १४
ययुस्तदा नागपुत्रौ सर्परूपसमन्वितौ ।
भूत्वा नृपं तु तौ बद्ध्वा वालाग्रेण क्षणेन तम् ॥ १५
पातयित्वा मायया च पातालं निन्यतुः क्षणात् ।
नीत्वा गृहं पूर्ववच्च मर्त्यरूपं समास्थितौ ॥ १६
ऊचतुर्नृपवर्याय द्वयोरपि सुवृत्तकम् ।
शङ्खस्तत्र समागत्य पप्रच्छ कुशलं नृपम् ॥ १७
ननाम शङ्खं भक्त्या च वनितां तस्य वै तदा ।
उवाच नृपपुत्रं तं शङ्खो हर्षसमन्वितः ॥ १८
पुत्रौ मे द्वादशाब्दांश्च पुत्रवत् पालितौ त्वया ।
सन्त्यज्यावां तु जनकौ त्वय्यासक्तौ च तिष्ठतः ॥ १९

किञ्चित्तदर्थं मत्तश्च ग्रहीतव्यं त्वयाधुना ।
शङ्खस्य वचनं श्रुत्वा प्रावदत्तं नृपात्मजः ॥ २०

वत्सः—

गृहे ते यानि सन्त्येव तानि सन्ति गृहे मम ।
भोग्यवस्तूनि यान्येव लोके ख्यातानि तानि च ॥ २१
प्रासादे मम सन्त्येव विना तां तु मदालसाम् ।
किं वा प्रयोजनं मेऽस्ति सर्वैर्भोग्यैश्च वस्तुभिः ॥ २२
समाहूता तु शङ्खेन शङ्खस्य तनया वरा ।
पूर्वज्ञानेन संपन्ना चाययौ हि मदालसा ॥ २३
मदालसां नृपो दृष्ट्वा हा प्रिये मम वल्लभे ।
सन्त्यज्य मां पापिनं त्वं प्रिये कुत्र गतासि वै ॥ २४
इत्युक्त्वालिङ्गितुं तां स हस्तौ प्रासारयत्तदा ।
सा तु दूरं जगामैव तामलब्ध्वा नृपात्मजः ॥ २५
पपात भूम्यां मूर्च्छां च संप्राप भृशदुःखितः ।
चक्रुः शैत्योपचारं तु शङ्खाद्यास्त्वरयान्विताः ॥ २६
प्रज्ञाहीनो नरपतिर्मृतवत् संस्थितोऽभवत् ।
तथाविधं तु तं दृष्ट्वा शङ्खाद्याश्च मृतं तु तम् ॥ २७
मेनिरे तं समालिङ्ग्य रुरुदुः शोकविह्वलाः ।
तथाविधं नरपतिं दृष्ट्वा प्राह मदालसा ॥ २८
तस्यैव प्रियभार्याहं प्रविष्टा तु हुताशनम ।
तुभ्यं दत्ता पराशक्त्या पूर्वरूपसमन्विता ॥ २९
सन्तप्तोऽयं वियोगान्मे त्यक्त्वा भोगांश्च पुष्कलान् ।
एकदारव्रतपरो ब्रह्मचर्ये स्वयं स्थितः ॥ ३०
दृष्ट्वा मामद्य चायातो मामालिङ्गितुमेव च ।
अलब्ध्वालिङ्गनं मेऽद्य पुनः शोकेन चापतत् ॥ ३१
संप्राप परमां मूर्च्छां नोत्तिष्ठेत् स कदाचन ।
आलिङ्गनं मम विना तवाज्ञावशगाधुना ॥ ३२
एवं सा पितरं प्राह पुनः शङ्खस्य शासनात् ।
तस्य पार्श्वे स्वय स्थित्वा चालिलिङ्ग पतिं दृढम् ॥ ३३

तत्क्षणाच्च समुत्थाय ददर्श च मदालसाम् ।
ततो धैर्यं समालम्ब्य शङ्खं पप्रच्छ वृत्तकम् ॥ ३४
जातं वृत्तमशेषेण शङ्खः प्राह मुदान्वितः ।
जग्राह तां विधानेन शङ्खदत्तां नृपात्मजः ॥ ३५
तत्र स्थित्वा दिनं राजा तया रेमेऽतिहृष्टधीः ।
शङ्खपालप्रभृतिभिर्नागेन्द्रैर्नृपनन्दनः ॥ ३६
मदालसायुतो भूत्वा स्वराष्ट्रं तु जगाम च ।
सर्वैः पितृगृहं प्राप ननाम पितरौ मुदा ॥ ३७
पुनर्मदालसाजन्मवृत्तं नागेन्द्रकारितम् ।
उवाच वत्सः पितरं बहुहर्षसमन्वितः ॥ ३८
ननाम राजा शङ्खं तं पूजयामास तान् क्रमात् ।
नृपाद्यैर्मानितः शङ्खो नागबृन्दसमन्वितः ॥ ३९
भार्यापुत्रयुतो भूत्वा मासत्रयमुवास सः ।
ततो विज्ञाप्य सर्वांश्च पुत्रभार्यासमन्वितः ॥ ४०
स्वगणैर्वेष्टितः शङ्खः पातालभुवनं ययौ ।
मदालसायुतो वत्सो बुभुजे दिव्यभोग्यकान् ॥ ४१
देवीभक्तियुतोऽभूच्च देवीयज्ञांश्चकार च ।
अयुतं वत्सरान् भूमिं पालयामास भार्यया ॥ ४२
अलर्के तनये वीरे धर्मिष्ठे रूपसुन्दरे ।
मदालसासुपुत्रे तु राज्यं न्यस्य स्वभार्यया ॥ ४३
पितृभ्यां यानमारुह्य देवीलोकमगाच्च सः ।
वत्सः प्राप महेशस्य सारूप्यं सर्वदुर्लभम् ॥ ४४
मदालसा पराशक्तेः सारूप्यं प्राप्य सर्वदा ।
उवास देवीपार्श्वे तु नित्यानन्दसमन्विता ॥ ४५
मदालसाचरित्रं तु देवीमाहात्म्यबोधकम् ।
यः पठेद्भावपूर्वं स सर्वान् कामानवाप्नुयात् ॥ ४६

॥ इति श्रीदक्षिणकुटीद्वीपक्षेत्रमाहात्म्ये मदालसासंयोगो नाम सप्तविंशोऽध्यायः ॥

## ॥ अथाष्टाविंशोऽध्यायः [ पञ्चाक्षरमन्त्रात्मकपरमेश्वरदेहवर्णनम् ] ॥

स्कन्दः—

अभिषिक्तः स्वराज्ये तु पित्रालर्को महाबलः ।
सार्वभौमश्रियं भोक्तुमैच्छद्धर्मपरस्सताम् ॥ १
अत्रिं वंशगुरुं गत्वा प्रणम्य विधिपूर्वकम् ।
बद्धाञ्जलिपुटो भूत्वा पप्रच्छ विनयेन तम् ॥ २

अलर्कः—

सप्तद्वीपाधिपत्यं संप्राप्तुं वाञ्छाम्यहं गुरो ।
उपायं तस्य संलब्ध्यै ब्रूहि देशिक ते नमः ॥ ३
सन्तुष्टः प्राह तं योगी ब्रह्मजोऽत्रिर्महामुनिः ।

अत्रिरुवाच—

सर्वेषां जनकं शम्भुं भज पञ्चाक्षरेण वै ॥ ४
सन्तुष्टः परमेशानः सर्वाभीष्टं प्रदास्यति ।
पञ्चाक्षरात्मको देहः परमेशस्य तं भज ॥ ५

अलर्कः—

पञ्चाक्षरात्मकं देहस्वरूपं तस्य मे वद ।

अत्रिः—

पञ्चाक्षरप्रभेदा वै शतं विंशतिसंयुतम् ॥ ६
तावत्संख्याकमन्त्रात्मा पार्वतीपतिरीश्वरः ।
तं क्रमं ते प्रवक्ष्यामि शृणु त्वं नृपसत्तम ॥ ७
'नमश्शिवाय'रूपः स्याच्छिरसः पूर्वभागकः ।
शिरसो मध्यमो भागस्स 'नमश्शियवा' त्वभूत् ॥ ८
पृष्ठभागो मस्तकस्य 'नमोवाशिय'कीर्तितः ।
फालस्य दक्षिणो भागो 'नमोवायशि' कीर्तितः ॥ ९
तस्य वै मध्यमो भागो 'नमश्यशिवा' त्वभूत् ।
'नमोयवाशि' वामस्तद्भागो जातो नृपोत्तम ॥ १०
'नशिमोवाय' सञ्जातस्तस्य भ्रूदक्षिणांशकः ।
वामो भ्रूभागकस्तस्य तथाभू'न्शिमोयवा' ॥ ११
'नशिवामोय' वै जातो दक्षिणाक्षिप्रदेशकः ।
वामाक्षिभागो 'नशिवायमो' वै संबभूव ह ॥ १२

'नशियमोवा' फालाक्षिप्रदेशः परमात्मनः ।
'नशियवामः' कथितो दक्षिणाक्षिनिमिस्थलम् ॥ १३
'नवामशिय' आख्यातं वामाक्षणि निमिस्थलम् ।
'नवामोयशि'संज्ञं स्यात् तृतीयाक्षिनिमिस्थलम् ॥ १४
'नवाशिमोय'संज्ञस्तु घ्राणमूलात्मको मतः ।
'नवाशियमः' कथितो घ्राणं तु परमात्मनः ॥ १५
नासिकादक्षिणद्वारं 'नवायमशिश'रूपकम् ।
'नवायशिमः' कथितो वामद्वारस्वरूपवान् ॥ १६
'नयमशिवा'यं मन्त्रो दक्षिणश्रुतिमूलकः ।
'नयमोवाशि'मन्त्रोऽयं वामश्रोत्रस्य मूलकः ॥ १७
'नयशिमोवा'मन्त्रस्तु दक्षिणश्रुतिगोलकः ।
'नयाशिवामो'मन्त्रस्तु वामश्रोत्रस्य गोलकः ॥ १८
'नयवामशिश'कथितो जिह्वामूलस्वरूपवान् ।
जिह्वामध्यस्वरूपोऽयं मनुर्हि 'नयवाशिमः' ॥ १९
जिह्वाग्रभागः कथितो मनु'र्मोनशिवाय' च ।
ऊर्ध्वोष्ठो 'मोनशियवा'मन्त्रात्मा परिकीर्तितः ॥ २०
'मोनवाशिय'मन्त्रस्तु ह्यधरोष्ठ इति स्मृतः ।
ऊर्ध्वस्था दन्तपङ्क्तिर्हि 'मोनवायशि' ईरितः ॥ २१
अधोगता 'मोनयाशिवा' मन्त्रो दन्तमालिका ।
'मोनयवाशि'मन्त्रस्तु तालुमूलप्रदेशकः ॥ २२
हनु'र्मशिनवाय' स्याद्दक्षिणः परमात्मनः ।
स्मृतो वामहनु'र्मशिनयवा' गिरिजापतेः ॥ २३
'मशिवानय' संज्ञस्तु कण्ठपूर्वात्मको मतः ।
'मशिवायन' मन्त्रस्तु कण्ठपृष्ठस्वरूपवान् ॥ २४
गले भागो 'मशियनवा' मन्त्रो दक्षिणः स्मृतः ।
वामो भागो 'मशियवान'मन्त्रः कथितो गले ॥ २५
'मोवानशिय'मन्त्रेशो दक्षिणस्कन्धरूपवान् ।
'मोवानयशि'मन्त्रेशो वामस्कन्धस्वरूपवान् ॥ २६
'मोवाशिनय'मन्त्रात्मा दक्षिणो बाहुमूलकः ।
'मोवाशियन्'मन्त्रस्तु वामः स्याद्बाहुमूलकः ॥ २७

'मोवायनशि'मन्त्रेशो दक्षिणो हस्त ईरितः ।
'मोवायशिन'मन्त्रेशो वामहस्तस्वरूपवान् ॥ २८
दक्षिणो 'मोयनशिवा' बाहुमध्यप्रदेशकः ।
बाहुमध्यं 'मोयनवाशि'संज्ञं वाममीरितम् ॥ २९
दक्षिणं हस्तमध्यं स्या'न्मोयशी'ति 'नवे'ति च ।
हस्तमध्यं 'मोयाशिवान'वामं परमेशितुः ॥ ३०
'मोयवानशि'संज्ञस्तु दक्षिणो मणिबन्धकः ।
'मोयवाशिन'मन्त्रस्तु वामः स्यान्मणिबन्धकः ॥ ३१
'शिनमोवाय'मन्त्रेशो दक्षिणः कूर्परो मतः ।
'शिनमोयवा'मन्त्रेशो वामकूर्पररूपवान् ॥ ३२
दक्षिणं 'शिनवामोय'मन्त्रः करतलं स्मृतम् ।
वामं करतलं प्रोक्तं मन्त्रस्तु 'शिनवायमः' ॥ ३३
'शिनयमोवा'कथितो दक्षिणाङ्गुष्ठरूपवान् ।
'शिनयवामो'मन्त्रेशो वामाङ्गुष्ठस्वरूपवान् ॥ ३४
'शिमोनवाय'कथितो दक्षिणा तर्जनी बुधैः ।
'शिमोनयवा'मन्त्रेशो वामा वै तर्जनी मता ॥ ३५
'शिमोवानय'मन्त्रेशो दक्षिणा मध्यमाङ्गुलिः ।
'शिमोवायन'मन्त्रोऽयं वामगा मध्यमाङ्गुलिः ॥ ३६
अनामिका दक्षिणा तु 'शिमो'ऽथ 'यनवा' स्मृतः ।
'शिमोयवान' उदितो वामगानामिका क्रमात् ॥ ३७
'शिवानमोय' मन्त्रेशो दक्षिणे तु कनिष्ठिका
'शिवानयमो'मन्त्रः स्याद्वामभागे कनिष्ठिका ॥ ३८
'शिवामोनय' आख्यातः करपृष्ठस्तु दक्षिणे ।
'शिवामोयन'मन्त्रेशः करपृष्ठस्तु वामके ॥ ३९
वक्षोमध्ये हृदात्मा वै 'शिवायनम' ईरितः ।
ऊर्ध्वभागो वक्षसः 'शिवायमोन'महामनुः ॥ ४०
'शियनमोवा'मन्त्रेशो दक्षिणस्तनरूपवान् ।
'शियनवामो'मन्त्रात्मा वामकस्तनरूपवान् ॥ ४१
'शियमोनवा'कथितः स्तनमध्यस्वरूपवान् ।
'शियमोवान'मन्त्रेशः प्रोच्यते दक्षिणोदरम् ॥ ४२

'शियवानमो'मन्त्रात्मा तुन्दे वामस्थलात्मकः ।
'शियवामोन'मन्त्रेशो नाभिरूपी परात्मनः ॥ ४३
'वानमाश्शिय'संज्ञस्तु बस्तिरूपी सदात्मनः ।
'वानमोयाशि'मन्त्रोऽयं कटिदेशस्वरूपवान् ॥ ४४
'वानशिमोय'मन्त्रेशः कटिपृष्ठात्मको मतः ।
ऊर्ध्वभागो 'वानशियमो'मन्त्रः पृष्ठ ईरितः ॥ ४५
'वानयमश्शि'मन्त्रेशः पृष्ठमध्यस्वरूपवान् ।
'वानयशिमो'मन्त्रात्मा दक्षिणः पार्श्व उच्यते ॥ ४६
'वामोनशिय'मन्त्रात्मा वामपार्श्वः प्रकीर्तितः ।
'वामोनयशि'मन्त्रेशो वीणादण्डस्वरूपवान् ॥ ४७
'वामश्शिनय'मन्त्रेशो गुदस्थानं परेशितुः ।
'वामश्शियन'मन्त्रोऽयं लिङ्गस्थानं शिवस्य ह ॥ ४८
मुष्के तु दक्षिणं बीजं 'वामोयनशि'संज्ञकम् ।
'वामोयशिन'मन्त्रेशो वामगं मुष्कबीजकम् ॥ ४९
'वाशिनमोय'मन्त्रेशो दक्षिणं चोरुमूलकम् ।
ऊरुमध्यं 'वाशिनयमो' मन्त्रो दक्षिणं स्मृतम् ॥ ५०
ऊरुपृष्ठं दक्षिणकं 'वाशिमोनय' उच्यते ।
'वाशिमोयन'रूपी तु दक्षिणो जानुरुच्यते ॥ ५१
'वाशियनमो'मन्त्रेशो जङ्घात्मा दक्षिणे तथा ।
'वाशियमोन'मन्त्रस्तु दक्षिणे पार्ष्णिरूपवान् ॥ ५२
'वायनमश्शि'मन्त्रस्तु दक्षिणे गुल्फरूपवान् ।
'वायनशिमो'मन्त्रेशो दक्षिणप्रपदात्मकः ॥ ५३
'वायमोनशि'मन्त्रस्तु दक्षिणः पाद ईशितुः ।
'वायमश्शिन'मन्त्रस्तु वामकं चोरुमूलकम् ॥ ५४
वायशिनमो'मन्त्रेशो वामोरोर्मध्यरूपवान् ।
'वायशिमोन'मन्त्रात्मा वामोरोः पृष्ठरूपवान् ॥ ५५
यनमश्शिवा'मन्त्रेशो वामजानुस्वरूपवान् ।
यनमोवाशि'मन्त्रात्मा वामजङ्घामयो मतः ॥ ५६
'यनशिमोवा'मन्त्रस्तु वामपार्ष्णिस्वरूपवान् ।
'यनशिवामो'मन्त्रात्मा वामगुल्फस्वरूपवान् ॥ ५७
'यनवामश्शि'मन्त्रोऽयं वामे तु प्रपदात्मकः ।

'यनवाशिमो'मन्त्रेशो वामपादस्वरूपवान् ॥ ५८
'यमोनशिवा'कथि ः पादाङ्गुष्ठस्तु दक्षिणे ।
'यमोनवाशि'मन्त्रात्मा द्वितीयाङ्गुलिरूपवान् ॥ ५९
'यमशिनवा'मन्त्रात्मा तृतीयाङ्गुलिसंज्ञकः ।
'यमशिवान'मन्त्रोऽयं तुरीयाङ्गुलिकात्मकः ॥ ६०
'यमोवानशि'मन्त्रस्तु कनिष्ठः परिकीर्तितः ।
पादाङ्गुष्ठस्वरूपी तु 'यमोवाशिन'वामके ॥ ६१
'यशिनमोवा' तस्माच्च द्वितीयाङ्गुलिरूपवान् ।
'यशिनवामो'मन्त्रस्तु तृतीयश्चेति कथ्यते ॥ ६२
'यशिमोनवा'मन्त्रेशश्चतुर्थाङ्गुलिरूपवान् ।
'यशिमोवान'मन्त्रस्तु कनिष्ठः परिकीर्तितः ॥ ६३
'यशिवानमो'दक्षिणे पादमूल उदीरितः ।
'यशिवामोन'वामे तु पादमूलात्मक. स्मृतः ॥ ६४
'यवानमशि'मन्त्रात्मा देवस्य प्राणरूपवान् ।
'यवानशिमो'मन्त्रात्मा वस्त्ररूपी कटि श्रितः ॥ ६५
'यवामोनशि'भूषात्मा गलादिषु समाश्रितः ।
'यवामशिन'मन्त्रस्तु परेशस्योपवीतकम् ॥ ६६
'यवाशिनमः' पीठात्मा स्वयंभूतेश्वरस्य च ।
'यवाशिमोन'मन्त्रः स्यात् परश्वादिकमायुधम् ॥ ६७
एवं पञ्चाक्षराकारो देवः पशुपतीश्वरः ।
पञ्चाक्षरे महामन्त्रे चैवं भेदाः प्रकीर्तिताः ॥ ६८
एवं पञ्चाक्षराकारमूर्तिमान् पार्वतीपतिः ।

॥ इति श्रीदक्षिणकुटीद्वीपक्षेत्रमाहात्म्येऽलर्कात्रिसंवादे पञ्चाक्षरमन्त्रात्मक-परमेश्वरदेहवर्णनं नामाष्टाविंशोऽध्यायः ॥

## ॥ अथैकोनत्रिंशोऽध्यायः [परमेश्वरमूर्तिभेदतत्तद्ध्यानश्लोकनिरूपणम्]

अलर्कः—

मूर्तिभेदान् महेशस्य ध्यानपूर्वं गुरो वद ।

आंत्रः—

लिङ्गोद्भूतविभुस्त्रिमूर्तकयुतः कल्याणमूर्त्यान्वित-
श्चोमाम्बासहितः सुखासनगतो गङ्गाधरो नृत्तकः ।
चण्डेशानवरप्रदो वृषगतः श्रीनीलकण्ठो विभु-
र्वामार्धे हरिसंयुतो निजतनावाजैकपादाभिधः ॥ १

नार्यर्धान्वितदेहको गुरुवरो गौरीगणेशान्वितः
गौरीस्कन्दयुतो हिमांशुकधरो यज्ञान्तकः कालहा ।
मारारिर्गजनाशकः पुरहरो भिक्षाशनो दैत्यहा
सिंहारिर्विधिगर्वहा पशुपतेः प्रोक्ता वरा मूर्तयः ॥ २

ज्योतीरूपसमन्वितं भुवनके व्याप्य स्थितं सर्वत-
स्तस्मिन् रूपसमान्वितं च पुरुषं नेत्रत्रयेणान्वितम् ।
पादान्वेषणतत्परेण हरिणा मूर्ध्नश्च सन्दर्शने
वाञ्छासंयुतपद्मजेन च युतं लिङ्गोद्भवं भावये ॥ ३

वामाङ्गात् कमलापतिं निजतनोर्वाणीश्वरं दक्षिणात्
कट्योर्ध्वाच्च ससर्ज यः पशुपतिः पादद्वयेनान्वितः ।
ध्याये तं परमेश्वरं त्रिनयन चन्द्रार्धचूडोज्ज्वलं
विश्वाधारकमीश्वरं युगभुजं त्रैमूर्तसंज्ञं शिवम् ॥ ४

शुद्धस्फाटिकविग्रहं शशिधरं पीताम्बरैः शोभितं
नानाभूषणभूषितं युगभुजं कन्दर्पवत् सुन्दरम् ।
वामाङ्के गिरिजायुतं च शिवयाश्लिष्टं सुराद्यैर्वृतं
सुस्थं पङ्कजपीठके हृदि भजे कल्याणवेषान्वितम् ॥ ५

विश्वेषामपि सर्जनावनकरी शक्तिः परा या शिवा
प्रोक्ता हैमवतीति वेदवचसा चोमेति संकीर्तिता ।
ध्याये तं परमेश्वरं दशभुजं युक्तं तया सर्वदा
चोमासंयुतमीश्वरं निजजनानां पालकं शंकरम् ॥ ६

कैलासे कमनीयके मणिमये कल्पद्रुमूले वरे
नानारत्नविचित्रिते सुखमये सिंहासने सुस्थितम् ।
वामाङ्के गिरिजायुतं कनकभं श्लिष्टं सुताभ्यां मुदा
ध्याये तं परमेश्वरं सुखयुतं शम्भुं सुखासीनकम् ॥ ७

गङ्गां लोकसुपावनीं तु वनितां कृत्वा जटागह्वरे
संस्थाप्यैव सुपालकं तु जगतां स्त्रीरूपसन्धारिणीम् ।
दृष्ट्वा कोपसमन्वितां तु गिरिजां संसान्त्वयन्तं हरं
शुद्धस्फाटिकविग्रहं हृदि भजे गङ्गाधरं धूर्जटिम् ॥ ८
तप्तस्वर्णसमानकान्तिरुचिरं व्याघ्राजिनालंकृतं
वामे कुञ्चितपादकं त्रिनयनं चन्द्रार्धचूडोज्ज्वलम् ।
नृत्यन्तं वरदक्षिणेन च पदा चञ्चत्करं मोहदं
ध्यायेऽहं हृदये सदा नटनकं गौरीयुतं सर्वदा ॥ ९
गोक्षीरेण दिनं शिवाय महसे लिङ्गात्मने भादतः
कुर्वन्तं त्वभिषेचनं तु विधिना चण्डेशनामान्वितम् ।
पित्रा पीडनसंयुतं च गणपं कृत्वा सदा पार्श्वगं
गौर्यामोदमवाप यः पशुपतिस्तं भक्तपालं भजे ॥ १०
मार्तण्डात् सुरभेः समुद्भवविभुर्धर्मात्मको यो वृष-
स्तस्य ध्यानसुपूजनाच्च मुदितः कृत्वा च तं वाहनम् ।
भक्तानुग्रहकारकं पशुपतिं गौरीयुतं सर्वदा
ध्याये तं वृषवाहनं त्रिनयनं चन्द्रार्धचूडोज्ज्वलम् ॥ ११
क्षीराम्भोनिधिमन्थनोद्भवविषं जम्बूफलाकारकं
कृत्वा यो निजलीलयाकबलयच्चक्रे सदा कण्ठगम् ।
पञ्चास्यं शशिशेखरं त्रिनयनं नीहारशुभ्रप्रभं
तं ध्याये हृदये महेशमनघं श्रीनीलकण्ठं विभुम् ॥ १२
वामार्धे हरिरूपिणं निजतनौ रुद्रात्मकं दक्षिणे
शूलं चक्रवराभयान् युगभुजैः सन्धारकं शंकरम् ।
नीलस्फाटिकवर्णशोभिततनुं चन्द्रार्धचूडोज्ज्वलं
भक्तानुग्रहकारकं हरिहराकारं सदा भावये ॥ १३
रक्ताङ्गं शशिशेखरं त्रिनयनं श्रीनीलकण्ठान्वितं
एकेनैव पदान्वितं ज्वरहरं पशुं च शूलायुधम् ।
हस्तैर्धारकमीश्वरं हुतवहं पाशं च सर्पात्मकं
भक्तानां भवरोगनाशनकरं रुद्रं सदा भावये ॥ १४
नार्यर्धान्वितदेहकं पशुपतिं वामार्धभागे वरे
शक्तेर्वस्त्रविभूषणैश्च लसितं पद्मं करे धारकम् ।

भागे दक्षिणके वरायुधधरं नागादिभिर्भूषितं
कट्यां नागमृगाजिनादिलसितं ध्यायेऽर्धनारीश्वरम् ॥ १५
शुद्धस्फाटिकविग्रहं वटतरोर्मूले स्थितं योगिनं
रुद्रं दक्षिणदिङ्मुखं त्रिनयनं चन्द्रार्धचूडोज्ज्वलम् ।
वेदान्तार्थसुबोधक तु यमिनां योगासनारूढकं
ध्याये लोकगुरुं महेशमनघं श्रीदक्षिणामूर्तिकम् ॥ १६
नानारत्नविचित्रिते मृदुमये पीठे स्थितं शंकरं
वामाङ्के गिरिजायुतं सुखकरे तस्यास्तु चोत्सङ्गके ।
संस्थेनैव गजाननेन विभुना बालेन संशोभितं
ध्याये तं गिरिजागणेशसहितं विघ्नेशसन्तोषदम् ॥ १७
हेमाङ्गं शशिशेखरं त्रिनयनं पर्श्वादिशस्त्रान्वितं
दिव्ये पीठवरे स्थितं गिरिजया संस्थाप्य मध्ये गुहम् ।
आनन्देन समन्वितं पशुपतिं भक्तेष्टसंदायकं
सोमास्कन्दमहेश्वरं हृदि भजे त्यागेश्वरं सिद्धिदम् ॥ १८
चन्द्रं ब्रह्मजशापतो निजतनौ रोगेण संपीडितं
तस्य ध्यानजपादितोषितविभुर्दत्त्वा मुदा दर्शनम् ।
मौलौ यस्तु दधार भक्तिवशगस्तं चन्द्रमौलीश्वरं
ध्याये चन्द्रनिभं शिवायुतमजं भक्तेष्टसन्दायकम् ॥ १९
दक्षस्यैव दुरात्मनो मखवरे भागादिभिर्वर्जिते
रुद्रस्यैव विनिन्दनात् पशुपतेः संभूय नेत्रानलात् ।
गत्वा तं च जघान यज्ञसहितं यो वै मुदा लीलया
ध्याये दक्षमखस्य नाशनकरं श्रीवीरभद्राभिधम् ॥ २०
भक्तस्यैव सुपालनाय महतो लिङ्गाच्च मूर्त्यान्वितः
प्रादुर्भूय निपात्य कालपुरुषं भूम्यां तु यो लीलया ।
दीर्घायुःप्रदमीश्वरं तमनघं श्यामाङ्गकं भीषणं
शूलाद्यायुधशोभितं हृदि भजे श्रीकालकालं शिवम् ॥ २१
निःसंप्रज्ञसमाधिमार्गनिरतो यो दक्षिणामूर्तिमान्
मारं विघ्नकरं तृतीयनयनोद्भूतेन यो वह्निना ।
दग्ध्वानङ्गयुतं चकार सुरपानां प्रार्थनाल्लीलया
तं देवं परमं भजे हृदि सदा कामान्तकं शंकरम् ॥ २२

विप्राणामभिचारयज्ञकभवान्नागान् मृगं पावकं
पशुं शूलवरं महाडमरुकं खड्गं सृणिं भीषणम् ।
धृत्वा हस्तवरैर्महागजपतिं भित्त्वा द्विधा लीलया
नृत्यन्तं गजमस्तके पशुपतिं ध्याये गजस्यान्तकम् ॥ २३

मेरुं चापवरं रथं च धरणीं चक्रे च भानुं विधुं
बाणं विष्णुमयं प्रकल्प्य परमं यन्तारमब्जोद्भवम् ।
आरुह्यैव रथं जघान समरे दैत्यान् वरान् त्रैपुरान्
यस्तं शंकरमीश्वरं हृदि भजे पञ्चाननं सौख्यदम् ॥ २४

कर्मब्रह्मवतां महामुनिगणानां तत्त्वदानाय च
धृत्वा मन्मथकोटिरूपसदृशीं मूर्तिं जगन्मोहिनीम् ।
भिक्षां यः कृतवान् मुनीन्द्रभवने योषिद्गणेष्वेव वै
तं देवं हृदि भावये पशुपतिं दिग्वाससं शंकरम् ॥ २५

पादाङ्गुष्ठनखेन भूतलवरे सृष्ट्वा च चक्रायुधं
दैत्येशं हरकोपसंभवज्वलं जालन्धरं लीलया ।
चक्रेणैव जघान यो हृदि भजे तं देवमीशानकं
शम्भुं पद्मजदेवपूर्वनुदितं जालन्धरस्यान्तकम् ॥ २६

हुंकारी शरभेश्वरोऽष्टचरणः पक्षी चतुर्बाहुकः
पादाग्रेण विदारको नरहरेः प्रत्यङ्गिरासंयुतः ।
शूलाद्यायुधशोभितः सुरमुखानां पालको भीषणो
लोकानां भयहारको रिपुहरो नः सम्मुखे शोभताम् ॥ २७

शंभोर्दूषणसंयुतस्य च विधेः प्राणैः समं शीर्षकं
छित्त्वा गर्वमपाहरत् पशुपतेर्यः शासनाल्लीलया ।
रक्तज्वालजटाधरं शशिधरं श्यामाङ्गकं भीषणं
ध्याये तं तु कपालपाणिमनिशं नग्नं महाभैरवम् ॥ २८

एवं षड्विंशतिस्तन्त्रे मूर्तयः परिकीर्तिताः ।
एकपादं तु सन्त्यज्य पञ्चविंशतिसंख्यया ॥ २९

मूर्तीः संप्रवदन्त्येव शंकरस्य च केचन ।
उमासहायमूर्तिं तु मुख्यभूतां हि शाम्भवाः ॥ ३०

तस्यावसरभेदेन शिष्टान् प्राहुस्तदुद्भवान् ।
सन्त्यज्य भैरवं वीरभद्रं वेदपथानुगाः ॥ ३१

एकपादं तु संयोज्य शिवस्य परमात्मनः ।
चतुर्विंशतिमूर्तीश्च तुरीयस्य वदन्ति ते ॥ ३२
तन्त्रशास्त्रपरा विप्राः सोमास्कन्दं नटेश्वरम् ।
सुखासनस्थं विघ्नेशगौरीयुक्तं गुरुं तथा ॥ ३३
सदाशिवस्य मूर्तीश्च प्रवदन्ति मुदान्विताः ।
भैरवं वीरभद्रं च शरभं ते च तान्त्रिकाः ॥ ३४
कालाग्निरुद्रमूर्तीर्वै प्राहुस्तच्छास्त्रमार्गतः ।
अन्याः सर्वा महेशस्य मूर्तयः परिकीर्तिताः ॥ ३५
उपासका विशेषेण गौरीयुतपरात्मनः ।
पञ्चविंशतिमूर्तीश्च प्राहुरेवं विचक्षणाः ॥ ३६
पञ्चाक्षरो महामन्त्रः शिवस्य परिकीर्तितः ।
पञ्चविंशतिमूर्तीनां मन्त्राः पञ्चाक्षरा वराः ॥ ३७
एकैकायाश्च मूर्तेस्तु स्थितिभेदेन राष्ट्रप ।
चत्वारो मूर्तयः प्रोक्तास्तेन पञ्चाक्षरो मनुः ॥ ३८
विंशत्याधिकपञ्चाशद्वयभेदयुतः स्मृतः ।
तावद्भेदयुता मन्त्रा नानासिद्धिप्रदायकाः ॥ ३९
पञ्चाक्षरे सिद्धियुक्तो ब्राह्मणः क्षत्रियोऽथवा ।
वैश्यो वा ह्यथवा शूद्रो दीक्षामार्गक्रमान्वितः ॥ ४०
अणिमाद्यष्टसिद्धीश्च विन्देत् सत्यं न संशयः ।
शिवस्य सदृशो भूत्वा सृष्टिसंहाररक्षणे ॥ ४१
भवेच्छक्तस्तु जगतां सत्यं सत्यं न संशयः ।

।इति श्रीदक्षिणकुटीद्वीपक्षेत्रमाहात्म्येऽलर्कात्रिसंवादे परमेश्वरमूर्तिभेद-तत्तद्ध्यानश्लोकनिरूपणं नामैकोनत्रिंशोऽध्यायः ॥

॥ अथ त्रिंशोऽध्यायः [पञ्चाक्षरयन्त्रभेदनिरूपणम्] ॥

पञ्चाक्षरस्य मन्त्रस्य यन्त्रान् मे ब्रूहि सत्तम ।

अत्रिरुवाच—

दक्षिणोत्तरभागेऽपि पूर्वपश्चिमभागके ॥

रेखाषट्कप्रभेदेन कोष्ठानां पञ्चविंशतिः ।
पञ्चपङ्क्तिक्रमेणैव भवेदेव यथाक्रमम् ॥ २
'नमश्शिवाय'मन्त्रे वै ऊर्ध्वपङ्क्तौ यथाक्रमम् ।
वामभागात् समारभ्य पञ्चकोष्ठेषु राष्ट्रप ॥ ३
एकैकवर्णः पञ्चार्णे लेखनीयो यथाक्रमम् ।
'मश्शिवायन'मन्त्रस्तु द्वितीये परिकीर्तितः ॥ ४
'शिवायनमो'मन्त्रस्तु तृतीये परिकीर्तितः ।
'वायनमश्शि'मन्त्रो वै चतुर्थी पङ्क्तिमाश्रितः ॥ ५
'यनमश्शिवा'मन्त्रोऽयं पञ्चमे कथितो भवेत् ।
पञ्चमन्त्रात्मको यन्त्रः प्रथमः कथितो नृप ॥ ६
द्वितीये पञ्च मन्त्रांश्च ब्रुवे त्वं शृणु सादरम् ।
'नमश्शियवा' प्रथमः 'मश्शियवान' वै ततः ॥ ७
'शियवानमः' पश्चात्तु 'यवानमश्शि' वै परम् ।
'वानमश्शिय'मन्त्रस्तु पञ्चमस्तु द्वितीयके ॥ ८
एवं तु पञ्च मन्त्राश्च यन्त्रे प्रोक्ता द्वितीयके ।
'नमोवाशिय'मन्त्रोऽयं तृतीये प्रथमो मतः ॥ ९
'मोवाशियन'मन्त्रस्तु तृतीये तु द्वितीयकः ।
पश्चात् 'वाशियनम'स्तु 'शियनमो'ऽथ 'वा' ततः ॥ १०
'यनमोवाशि'मनुस्तु तृतीये पञ्चमः स्मृतः ।
एवं तु पञ्च मन्त्राश्च तृतीये यन्त्र ईरिताः ॥ ११
चतुर्थे 'नमोवायशि' प्रथमः परिकीर्तितः ।
'मोवायशिन' तत्पश्चात् 'वायशिनमो' वै ततः ॥ १२
'यशिनमोवा' तत्पश्चात् 'शिनमोवाय' वै परम् ।
एवं चतुर्थयन्त्रे तु पञ्च मन्त्राः प्रविश्रुताः ॥ १३
पञ्चमे 'नमोयशिवा' प्रथमो मन्त्र उच्यते ।
'मोयशिवान' तत्पश्चात् 'यशिवानमो' वै ततः ॥ १४
'शिवानमोय'कथितं 'वानमोयशि' वै ततः ।
एवं तु पञ्च मन्त्राश्च यन्त्रे वै पञ्चमे स्मृताः ॥ १५
'नमोयवाशि'मन्त्रश्च षष्ठे तु प्रथमो मतः ।
'मोयवाशिन' तत्पश्चात् 'यवाशिनम' इष्यते ॥ १६

'वाशिनमोय' कथितं तत्परम् 'शिनमोयवा' ।
एवं तु पञ्च मन्त्राश्च षष्ठे प्रोक्ताः क्रमेण वै ॥ १७
'नशिमोवाय'मन्त्रोऽयं सप्तमे प्रथमो मतः ।
'शिमोवायन'तत्पश्चात् 'मोवायनशि' वै ततः ॥ १८
पश्चाद्धि 'वायनशिम'स्तुरीये स्थान ईरितः ।
पञ्चमे 'यनशि' प्रोक्तो 'मोवा' चैव ततो मतः ॥ १९
एवं तु सप्तमे खण्डे पञ्च मन्त्राः प्रकीर्तिताः ।
'नशिमोयवा'मन्त्रोऽयमष्टमे प्रथमो मतः ॥ २०
'शिमोयवान' तत्पश्चात् 'मोयवानशि' वै ततः ।
'यवानशिम'स्तत्पश्चात् 'वानशिमोय' वै ततः ॥ २१
एवं तु पञ्च मन्त्राश्च खण्डे वै चाष्टमे स्मृताः ।
'नशिवामोय'मन्त्रोऽयं नवमे प्रथमो मतः ॥ २२
'शिवामोयन' तत्पश्चात् 'वामोयनशि' वै ततः ।
चतुर्थे 'मोयनशिवा' स्थाने मन्त्रः प्रकीर्तितः ॥ २३
पञ्चमे 'यनशि' प्रोक्तो 'वामो'ऽपि स्यात्ततः परम् ।
एवं तु पञ्च मन्त्राश्च नवमे परिकीर्तिताः ॥ २४
'नशिवायमो'ऽयं मन्त्रो दशमे प्रथमो मतः ।
'शिवायमोन' तत्पश्चात् 'वायमोनशि' वै ततः ॥ २५
'यमोनशिवा'मन्त्रोऽयं 'मोनशिवाय' वै ततः ।
एवं वै पञ्च मन्त्राश्च यन्त्रे तु दशमे स्मृताः ॥ २६
आद्यो 'नशियमोवा'यं यन्त्र एकादशे स्मृतः ।
'शियमोवान' तत्पश्चात् 'यमोवानशि' वै ततः ॥ २७
'मोवानशिय'पश्चात्तु चतुर्थे कोष्ठ ईरितः ।
पञ्चमे 'वानशियमः' कोष्ठे मन्त्रः प्रकीर्त्यते ॥ २८
एकादशे यन्त्रवरे मन्त्रास्त्वित्थं प्रकीर्तिताः ।
मनु'र्नशियवामो' वै यन्त्रे द्वादश आदिमः ॥ २९
'शियवामोन' तत्पश्चात् 'यवामोनशि' वै ततः ।
'वामोनशिय' तत्पश्चान क्रमात् 'मोनशि' वै 'यवा' ॥ ३०
एवं च पञ्च मन्त्राश्च द्वादशे परिकीर्तिताः ।
'नवामशिय'मन्त्रोऽयमादिमः स्यात् त्रयोदशे ॥ ३१

'वामश्शियन'तत्पश्चात् परं 'मश्शिय' वै 'नवा'।
'शियनवामो'मन्त्रोऽथ 'यनवामश्शि'मन्त्रकः ॥ ३२
एवं तु पञ्च मन्त्राश्च कथिता हि त्रयोदशे ।
'नवामोयशि'मन्त्रोऽयं प्रथमः स्याच्चतुर्दशे ॥ ३३
'वामोयशिन'मन्त्रोऽथ ततो 'मोयशि' वै 'नवा' ।
पश्चात् 'यशिनवामः' स्यात् 'शिनवामोय' वै ततः ॥ ३४
एवं वै पञ्च मन्त्राश्च कथिताः स्युश्चतुर्दशे ।
'नवाशिमोय'मन्त्रस्तु प्रोक्तः पञ्चदशे पुरः ॥ ३५
'वाशिमोयन' तत्पश्चाद्वै 'शिमोयनवा' ततः ।
'मोयनवाशि' तत्पश्चात्ततो वै 'यनवाशिमः' ॥ ३६
एवं पञ्चदशे यन्त्रे मन्त्राश्च परिकीर्तिताः ।
'नवाशियमो'मन्त्रस्तु षोडशे प्रथमः स्मृतः ॥ ३७
'वाशियमोन' तत्पश्चात्ततो वै 'शियमोनवा' ।
'यमोनवाशि' तत्पश्चात् 'मोनवाशिय' अन्तिमः ॥ ३८
एवं क्रमेण सम्प्रोक्ता मन्त्राः पञ्च हि षोडशे ।
'नवायमश्शि'मन्त्रोऽयं स्मृतः सप्तदशे पुरः ॥ ३९
'वायमश्शिन'तत्पश्चात् 'यमश्शि' च 'नवा' ततः ।
ततो 'मश्शिनवाय'स्यात् पञ्चमः 'शिनवायमः' ॥ ४०
एवं तु पञ्च मन्त्राश्च प्रोक्ताः सप्तदशे क्रमात् ।
'नवायशिमो'मन्त्रोऽयं प्रोक्तश्चाष्टादशे पुरः ॥ ४१
'वायशिमोन' मन्त्रश्च 'यशिमो' वै 'नवा' ततः ।
'शिमोनवाय' तत्पश्चात् 'मोनवायशि' चान्तिमः ॥ ४२
एवमष्टादशे पञ्च मन्त्राश्च परिकीर्तिताः ।
एकोनविंशतितमे प्रथमो 'नयमश्शिवा' ॥ ४३
'यमश्शिवान' तत्पश्चात् 'मश्शिवानय' वै ततः ।
पश्चात् 'शिवान' च 'यमः' ततो 'वानयमश्शि' च ॥ ४४
एवमेकोनविंशत्यां मन्त्राः पञ्च प्रकीर्तिताः ।
ततो वै विंशतितमे 'नयमोवाशि'मन्त्रकः ॥ ४५
'यमोवाशिन' तत्पश्चात् 'मोवाशिनय' वै ततः ।
ततो वै 'वाशिनयमः' पश्चात् 'शिनयमो'ऽथ 'वा' ॥ ४६

एवं पञ्च महामन्त्रा विंशत्यां परिकीर्तिताः ।
एकाविंशे 'नयशिमोवा' यन्त्रे प्रथमः स्मृतः ॥ ४७
'यशिमोवान' तत्पश्चात् 'शिमोवानय' वै ततः ।
'मोवानयशि' पश्चात्तु ततो 'वानय' वै 'शिमः' ॥ ४८
एकविंशे यन्त्रवरे पञ्च मन्त्राः प्रकीर्तिताः ।
'नयशिवामो'मन्त्रेशो द्वाविंशतितमे पुरः ॥ ४९
'यशिवामोन' तत्पश्चात् 'शिवामोनय' वै ततः ।
'वामोनयशि' पश्चात्तु वै 'मोनयशिवा' ततः ॥ ५०
द्वाविंशतितमे चैवं पञ्च मन्त्राः प्रकीर्तिताः ।
त्रयोविंशे यन्त्रराजे 'नयवामश्शि' चादिमः ॥ ५१
'यवामश्शिन'तत्पश्चात् 'वामश्शिनय' वै ततः ।
ततो वै 'मश्शिनयवा' पश्चात् 'शिनयवा' च 'मः' ॥ ५२
यन्त्रराजे त्रयोविंशे मन्त्राश्चैवं क्रमात् स्मृताः ।
चतुर्विंशे यन्त्रराजे प्रथमो 'नयवाशिमः' ॥ ५३
'यवाशिमोन' पश्चात्तु 'वाशिमोनय' वै ततः ।
वै 'शिमोनयवा' पश्चात्ततो 'मोनयवाशि' वै ॥ ५४
इत्थं यन्त्रे चतुर्विंशे प्रोक्ता वै पञ्च मन्त्रकाः ।
चतुर्विंशतिमूर्तीनां चक्राण्येवं स्मृतानि च ॥ ५५
अष्टकर्मप्रयोगाश्च शास्त्रेषु कथिता बुधैः ।
स्तम्भनं मारणं वश्यं भेदनाकर्षणे तथा ॥ ५६
उच्चाटनं मोहनं च तथा पीडनकं क्रमात् ।
देवतिर्यङ्मर्त्यभेदादेकैकं त्रिविधं स्मृतम् ॥ ५७
देववश्यं तु प्रथमं द्वितीयं मर्त्यवश्यकम् ।
तृतीयं सिंहपूर्वादिजातीनां वश्यमीरितम् ॥ ५८
चतुर्थं देवजातीनां मोहनं परिकीर्तितम् ।
पञ्चमं मर्त्यजातीनां मोहकं चेति कथ्यते ॥ ५९
षष्ठं तु मृगपूर्वाणां तथा वै मोहदायकम् ।
सप्तमादित्रयं ज्ञेयं त्रयाणां स्तम्भनं क्रमात् ॥ ६०
चक्रकाणि ततस्त्रीणि तथाकर्षणकानि च ।
विद्वेषकारकाणि स्युस्ततस्त्रीणि यथाक्रमम् ॥ ६१
उच्चाटनकराण्येवं ततस्त्रीणि क्रमेण च ।

मारकाणि ततस्त्रीणि भेदकान्यन्तिमानि च ॥ ६२
ह्रीं क्लीं बीजे योजनीये वश्यकर्मणि जापकैः ।
ग्लौं टं बीजे योजनीये स्तम्भने जपकर्मणि ॥ ६३
आं वं त्वाकर्षणे योज्ये यं क्रों चोच्चाटने तथा ।
हुंकारश्च तथा हं खं भेदने कथितानि च ॥ ६४
क्लींकारश्चापि श्रींकारो मोहने परिकीर्तितौ ।
हुंफट्स्वाहा च हंकारः पीडने मारणे तथा ॥ ६५
पञ्चविंशतिकोष्ठाढ्यो वरः पञ्चार्णयन्त्रकः ।
षट्कोणस्थत्रिकोणे तु क्रमात् पञ्चार्णयन्त्रकः ॥ ६६
वश्यप्रदो लेखनीयं सर्वतो बीजयुग्मकम् ।
त्रिकोणं मोहने प्रोक्तमथ त्वाकर्षणे स्मृतम् ॥ ६७
षट्कोणं चाष्टपत्रं च तन्मध्ये तु त्रिकोणकम् ।
मारणे कथितं राजन् भेदने वृत्तमीरितम् ॥ ६८
उच्चाटने वायुकोणं भूकोणं स्तम्भने स्मृतम् ।
राशिचक्रं तु विद्वेषे वृत्तमध्ये प्रकीर्तितम् ॥ ६९
विद्याकामस्तु वाग्बीजं पञ्चार्णेन सुयोजयेत् ।
लक्ष्मीकामस्तु श्रीबीजमारोग्ये शक्तिबीजकम् ॥ ७०
तारविघ्नेशबीजाढ्यः सर्वसिद्धिप्रदायकः ।
सुखासनगता मूर्तिः शक्तिपुत्रद्वयान्विता ॥ ७१
धर्मार्थकाममोक्षाणां दायिनी सा प्रकीर्तिता ।
सोमास्कन्दाभिधा मूर्तिः पुत्रसौख्यप्रदायिनी ॥ ७२
नृत्तेशमूर्तिः प्रवरा सम्पद्योगप्रदायिनी ।
दक्षिणामूर्तिरतुला मेधाप्रज्ञाप्रदायिनी ॥ ७३
वृषभारूढमूर्तिस्तु धर्मसिद्धिप्रदा मता ।
गङ्गाधराभिधा मूर्तिः सर्वपापप्रणाशिनी ॥ ७४
अर्धनारीशमूर्तिस्तु सर्वसौख्यप्रदायिनी ।
उमासहायमूर्तिस्तु भार्यासौख्यप्रदा मता ॥ ७५
नीलकण्ठाभिधा मूर्तिर्विषदोषप्रणाशिनी ।
कालसंहारमूर्तिस्तु सर्वारिष्टविनाशिनी ॥ ७६
गौरीविघ्नेशसंयुक्ता सर्वसिद्धिप्रदा मता ।

लिङ्गोद्भवा मोक्षदात्री त्रिमूर्तिर्वंशवृद्धिदा ॥ ७७
चन्द्रशेखरमूर्तिस्तु धनधान्यप्रदायिनी ।
त्रिपुरारिर्जन्महन्त्री जरामृत्युविनाशिनी ॥ ७८
पराभिचारशमनी गजसंहारकारिणी ।
कल्याणसुन्दरी मूर्तिः सर्वदा मङ्गलप्रदा ॥ ७९
धर्मार्थदायिनी प्रोक्ता मूर्तिर्हरिहराभिधा ।
कामारिर्योगदा प्रोक्ता योगविघ्नविनाशिनी ॥ ८०
चण्डेशवरसन्दात्री महापातकनाशिनी ।
जालन्धरध्वंसिनी तु दुष्टानां नाशिनी मता ॥ ८१
रक्षाकरी भैरवी तु शरभारिप्रणाशिनी ।
शत्रुद्वेषनिहन्त्री स्याद्दक्षाध्वरविनाशिनी ॥ ८२
एकपादाभिधा मूर्तिर्महारोगविनाशिनी ।
भिक्षाटनकरी मूर्तिर्योषिद्बृन्दविमोहिनी ॥ ८३
गौरीगणेशसंयुक्ता ध्येया वश्ये तु जापकैः ।
उमासहायमूर्तिस्तु ध्येया स्यात्तु षडक्षरे ॥ ८४
सुखासनगता मूर्तिः शक्तिपञ्चाक्षरे स्मृता ।
गौरीविघ्नेशसंयुक्ता मन्त्रे प्रासादके वरे ॥ ८५
चतुर्विंशतिमूर्तीनां स्थितिभेदेन राष्ट्रप ।
विंशत्या सहितं भेदाः कथिताः शतमागमे ॥ ८६
एवं पञ्चार्णमार्गस्तु प्रोक्तोऽलर्क मयाधुना ।
श्रीदक्षिणकुटीद्वीपं कावेर्या दक्षिणे स्थितम् ॥ ८७
स्वायंभुवं परं क्षेत्रं स्वयंज्योतिःस्वरूपकम् ।
तत्र गत्वा स्वयं भूतं परमेशं प्रतोषय ॥ ८८

॥ इति श्रीदक्षिणकुटीद्वीपक्षेत्रमाहात्म्येऽलर्कात्रिसंवादे पञ्चाक्षरयन्त्रभेद-निरूपणं नाम त्रिंशोऽध्यायः ॥

---

## ॥ अथैकत्रिंशोऽध्यायः [अलर्कराजसशरीरसायुज्यप्राप्तिः] ॥

सनत्कुमारः—

अलर्कराजपुत्रस्य चरित्रं च वरादिकम् ।
कृपया ब्रूहि देवेश महासेन जगद्गुरो ॥ १

अत्रेश्च शासनादेव वत्सस्य तनयो नृपः ।
श्रीदक्षिणकुटीद्वीपं क्षेत्रं स्वायंभुवं वरम् ॥ २
गत्वा तीर्थे सन्निधिस्थे स्नात्वा विधिपुरस्सरम् ।
स्वयंभूतं महालिङ्गं वसिष्ठेशमनामयम् ॥ ३
पुपूजे विधिपूर्वं तु स्थित्वा देवस्य सन्निधौ ।
शक्तिपञ्चाक्षरं मन्त्रं भावपूर्वं जजाप ह ॥ ४
द्वादशब्दात् परं शम्भुः भृशं हर्षमवाप च ।
आविरासील्लिङ्गमध्याद्गौरीस्कन्दगणेश्वरैः ॥ ५
वृषारूढो नन्दिकेशचण्डीशादिगणेश्वरैः ।
ब्रह्मविष्णुहरेन्द्रादिदेवैरपि सुसेवितः ॥ ६
वसिष्ठादिमुनीन्द्रैश्च संस्तुतो योगिभिस्तथा ।
ततो राजा देहभावं विस्मृत्यानन्दसंयुतः ॥ ७
ननर्त च पुनः प्रज्ञां प्राप्य रुद्रस्य सूक्तकैः ।
ननाम परमेशानं तुष्टुवे भावपूर्वकम् ॥ ८

अलर्कः—

महाशम्भुलोके वसन्तं गणेन्द्रैः
शिवास्कन्दविघ्नेशयुक्तं महेशम् ।
परंज्योतिरूपं विकारादिहीनं
वसिष्ठेशमाद्यं महेशं भजेऽहम् ॥ ९
कुटीद्वीपसंज्ञे वने दक्षिणस्थे
महाकल्पकाले जले सर्वशून्ये ।
धरां द्वीपवर्यां च कृत्वा वसन्तं
वसिष्ठेशमाद्यं महेशं भजेऽहम् ॥ १०
वसिष्ठेन सिद्ध्यै सदा पूज्यमानं
विधीन्द्रादिदेवैः सदा सेव्यपादम् ।
निजाभीष्टदानाय मूर्त्यन्वितं त्वां
वसिष्ठेशमाद्यं महेशं भजेऽहम् ॥ ११
महाविष्णुमीशं तनोर्वामभागा-
द्विधिं दक्षिणाङ्गात् ससर्जैव रुद्रम् ।
स्वकीयाग्निनेत्रात् पुरा सृष्टिकाले
वसिष्ठेशमाद्यं महेशं भजेऽहम् ॥ १२

महामेरुशैलेऽपि कैलासशैले
मुदा भोगवत्यां सदा क्रीडमानम् ।
धरायां कुटीद्वीपमध्ये लसन्तं
वसिष्ठेशमाद्यं महेशं भजेऽहम् ॥ १३
पुरा कार्तवीर्यस्य बाहुप्रदं त्वा-
मृचीकस्य पुत्राय धेनुप्रदं वै ।
महाशङ्खनागस्य पुत्रीप्रदं त्वां
वसिष्ठेशमाद्यं महेशं भजेऽहम् ॥ १४
विधीशानरूपं रमेशानरूपं
सुरेशानरूपं च भानुस्वरूपम् ।
सदा सोमयागे मुदा भुञ्जमानं
वसिष्ठेशमाद्यं महेशं भजेऽहम् ॥ १५
धरावारिरूपं हुताशस्वरूपं
नभोवायुरूपं दिगीशादिरूपम् ।
प्रधानस्वरूपं महत्तत्त्वरूपं
वसिष्ठेशमाद्यं महेशं भजेऽहम् ॥ १६

स्कन्दः—

भुजङ्गप्रयातं त्वलर्केन चोक्तं
नरो यस्तु भक्त्या त्रिसन्ध्यं पठेद्यः ।
इह प्राप्य भोगान् महेशप्रसादा-
न्महादेवलोकं लभेतैव सत्यम् ॥ १७
अलर्कं प्रावदत् प्रीत्या स्वयंभूतेश्वरः शिवः ।

वसिष्ठेशः—

वरान् वृणु नृपश्रेष्ठ दास्ये तुभ्यं न संशयः ॥ १८

अलर्कः—

तव पादाम्बुजद्वन्द्वे भक्तिं देहि सुनिश्चलाम् ।
दानेऽर्थिनां मतिं श्रद्धां देहि चाक्षय्यसंपदः ॥ १९
सप्तद्वीपाधिपत्यं च धर्मे बुद्धिं प्रदेहि मे ।
अलर्कसदृशो दाता नान्योऽस्ति भुवनत्रये ॥ २०
एवं कीर्तिं च देहान्ते देहि मे निलयं तव ।

17

स्कन्दः—

यद्यच्च प्रार्थितं तेन तत् सर्वं प्रददौ मुदा ॥ २१
तन्मूर्ध्नि हस्तं संस्थाप्य तिरोऽभूत् परमेश्वरः ।
स्वयंभूतेश्वरस्यैवं सगणस्य यथाक्रमम् ॥ २२
शिल्पिभिः कारयित्वैव स्वालयं प्रययौ नृपः ।
शिवस्यैव प्रसादेन सप्तद्वीपाधिपोऽभवत् ॥ २३
निधयो नव तद्गेहे न्यवसन् शंकराज्ञया ।
भूलोकवासिनः सर्वांस्तत्तद्वर्णानुसारतः ॥ २४
सुखभोगयुतांश्चके यज्ञैश्च स्वर्गसंस्थितान् ।
यद्यच्च प्रार्थ्यते तत्तद्दद्यादेव क्षणेन सः ॥ २५
नेत्रे ददौ सुरेन्द्राय बाणेनोत्पाट्य राट्नृपः ।
स्वदेहं विष्णवे प्रादाद्वनितां ब्राह्मणाय हि ॥ २६
अलर्कसदृशो दाता नास्ति ब्रह्माण्डमण्डले ।
इति कीर्तिं स संप्राप महेशानप्रसादतः ॥ २७
अन्नशालां प्रपाशालां विद्याशालां हिताय च ।
वैद्यशालां तथा चान्यान् धर्मानपि चकार सः ॥ २८
अतुलं शैवमार्गं तु स्थापयामास भूतले ।
ब्राह्मणे वेदशैवं च मिश्रशैवं तु बाहुजे ॥ २९
वैश्ये तथैव शूद्रेषु तन्त्रशैवं त्वकल्पयत् ।
शतोपनिषदः सन्ति सूक्तानि नमकानि च ॥ ३०
पृथक् पृथक् पञ्च सन्ति चेतिहासोत्तमं तथा ।
ख्यातं शिवरहस्याख्यं जैगीषव्याय कीर्तितम् ॥ ३१
स्कान्दं महाशैवकूर्मे पुराणप्रवराणि च ।
शिवोपनिषदामर्थबोधकं स्मृतिजालकम् ॥ ३२
एतेषामपि सिद्धान्तमार्गेण परमेश्वरम् ।
भजन्ति ये तथा कुर्युर्वेदमार्गेण मानवाः ॥ ३३
वर्णाश्रमाचारधर्मान् शैवा वैदिकसंज्ञकाः ।
वर्णाश्रमाचारधर्मान् वेदमार्गेण भूतले ॥ ३४
उपासनं तन्त्रमार्गाद्यै कुर्वन्ति नरोत्तमाः ।
मिश्रशैवाश्च ते प्रोक्ता वेदतन्त्रसमाश्रयात् ॥ ३५
वर्णाश्रमाचारधर्मं तथैवोपासनं प्रभोः ।

कुर्वन्ति ये तन्त्रमार्गाच्छुद्धशैवा इति स्मृताः ॥ ३६
एवं तु त्रिविधं शैवं तत्तन्मार्गानुसारतः ।
पालयामास धर्मात्मा भूतले धर्मपालकः ॥ ३७
कर्तव्या शाम्भवी भक्तिर्धर्तव्यं च त्रिपुण्ड्रकम् ।
जप्तव्या शाम्भवी विद्या स्मर्तव्यः परमेश्वरः ॥ ३८
एवमाघोषयामास सप्तद्वीपेषु भूतले ।
आज्ञाच्छेदी नरः सत्यं भवेद्वध्यो न संशयः ॥ ३९
महेशप्रीतये यज्ञाः कृता लोके द्विजादिभिः ।
चातुर्वर्ण्यजनैश्चापि रुद्रपाशुपतो मखः ॥ ४०
स्वस्वजात्यनुरूपेण कृतो भावपुरःसरम् ।
दरिद्रो वाथवा रोगी क्षीणायुः स्वल्पभोगवान् ॥ ४१
तस्मिन् राज्ये तु नास्त्येव सर्वेऽपि धनसंयुताः ।
दृढदेहा बन्धुयुता भोगसौख्यसमन्विताः ॥ ४२
शिवभक्तियुताः सर्वे स्ववर्णाश्रमपालकाः ।
दयावन्तो दानशीला बभूवुर्नृपशासनात् ॥ ४३
षष्टिर्वर्षसहस्राणि षष्टिर्वर्षशतानि ।
पालयामास धर्मात्मा ह्यलर्कः पृथिवीपतिः ॥ ४४
पुत्रे राज्यं विनिक्षिप्य तपसे स वनं ययौ ।
योगमार्गं दत्तमुखाच्छ्रुत्वालर्कस्ततः परम् ॥ ४५
श्रीदक्षिणकुटीद्वीपक्षेत्रं संप्राप मुक्तये ।
असंप्रज्ञातयोगेन स्थित्वा शान्तिमवाप ह ॥ ४६
ज्योतीरूपी लिङ्गरूपी बभूव परमेश्वरः ।
सशरीरो नृपोऽलर्कस्तस्मिँल्लीनो बभूव ह ॥ ४७
अलर्को नाम भूपालः शिवभक्तशिरोमणिः ।
श्रीदक्षिणकुटीद्वीपे स्वयंभूतेश्वरे शिवे ॥ ४८
शरीरेणैव सायुज्यं प्राप्तवान् सर्वदुर्लभम् ।
इदं पठति यो भक्त्या श्रृणुयाद्वा नरोत्तमः ॥ ४९
इह भुक्त्वाखिलान् भोगानन्ते शिवपदं व्रजेत् ।

॥ इति श्रीदक्षिणकुटीद्वीपक्षेत्रमाहात्म्येऽलर्कराजसशरीरसायुज्यप्राप्तिर्नामैकत्रिंशोऽध्यायः ॥

## ॥ अथ द्वात्रिंशोऽध्यायः [सुगन्धिकन्यकापतिसञ्जीवनम्] ॥

सनत्कुमारः—

ख्यातायाः सर्वलोकानां नायिकेति षडानन ।
पराशक्तेश्च माहात्म्यमपि मे कृपया वद ॥ १

स्कन्दः—

श्रीदक्षिणकुटीद्वीपे पूर्वभागे शिवालयात् ।
ब्राह्मणो वेदशास्त्रज्ञो गृहस्थाश्रमसंस्थितः ॥ २
उञ्छवृत्तिं समाश्रित्य देवीभक्तिं चकार ह ।
सर्वाङ्गगन्धसंयुक्ता चारुरूपसमन्विता ॥ ३
पुत्री चैका बभूवास्य सत्यां शक्तिप्रसादतः ।
सुगन्धिरिति नामास्याश्चकार ब्राह्मणोत्तमः ॥ ४
सुशीलः स तु विख्यातः सती तद्वनिता श्रुता ।
बालायाः पञ्चमाब्दे तु सती माता मृता त्वभूत् ॥ ५
अग्निहोत्रसुसिद्ध्यर्थं ब्राह्मणोऽन्यां तु चण्डिकाम् ।
भार्यां द्वितीयां जग्राह वसिष्ठस्य तु शासनात् ॥ ६
सुगन्धिर्गुणसंपन्ना शक्तिभक्तिसमन्विता ।
पित्रोरपि च शुश्रूषापरा देव्याश्च सन्निधौ ॥ ७
शुद्धिं कृत्वा रङ्गवल्ल्या ह्यलंकृत्य विशेषतः ।
पुष्पमाहृत्य चारामान्मालां कृत्वा मनोहराम् ॥ ८
समर्पयित्वा स्थित्वानुदिनं देव्याश्च सन्निधौ ।
पितृदत्तां च श्रीविद्यां जपेद्भावपुरःसरम् ॥ ९
चण्डिकायां सुशीलस्य जाताः पुत्र्यौ च पुत्रकः ।
स तु चोञ्छशिलेनैव ररक्ष स्वकुटुम्बकम् ॥ १०
सुगन्धौ सा द्वेषयुता चण्डिका संबभूव ह ।
एकवारं तु सा भुक्तिं तस्या दूषणपूर्वकम् ॥ ११
दद्यात् प्रतिदिनं चण्डी सुगन्धिः क्षमयान्विता ।
दत्तं भुक्त्वा शक्तिभक्तिं चकार जपपूर्वकैः ॥ १२
सुगन्धिं परिणेतुं ये ब्राह्मणाः प्रागता मुदा ।
नानोपायैश्च तान् सर्वांस्तिरस्कुर्याच्च चण्डिका ॥ १३
द्वादशाब्दे ऋतुमती सुगन्धिः संबभूव ह ।

न चाजग्मुश्च कन्यार्थं वटवो ब्राह्मणास्ततः ॥ १४
सुगन्धिर्दुःखसंयुक्ता देव्याः सा सन्निधिं ययौ ।
कल्पयित्वा वह्निकुण्डं ध्यात्वा शक्तिं हृदम्बुजे ॥ १५
पपात वह्निकुण्डे सा तदान्तः परमेश्वरी ।
संगृह्य कुन्तलं तस्याः प्राक्षिपद्दूरदेशके ॥ १६
तदा ददर्श तां शक्तिं सर्वावयवसुन्दरीम् ।
सुगन्धिकुन्तलोपेतां सर्वेष्वङ्गेषु वासिताम् ॥ १७
दृष्ट्वा सा कन्यका नत्वा स्तुत्वा प्राह पराम्बिकाम् ।

कन्योवाच—

असंस्कृता पितृगृहे कन्या या तु रजस्वला ॥ १८
सा कन्या वृषली ज्ञेया तत्पतिर्वृषलीपतिः ।
एवं धर्मश्च कथितो जनित्वा ब्राह्मणस्य ह ॥ १९
जाताहं वृषली भूम्यां न चार्हा हि द्विजन्मनाम् ।
अतो देहं परित्यक्तुमारब्धा जगदीश्वरि ॥ २०
त्वं तु मे दर्शनं दत्त्वा देहरक्षां चकर्थ ह ।
गतिं कल्पय मे देवि वृषलीत्वविनाशने ॥ २१

देव्युवाच—

तापसीनां न दोषोऽस्ति वृषलीत्वं न विद्यते ।
भर्तृग्रहणपर्यन्तं तापसी कन्यकैव हि ॥ २२
प्रवृद्धकन्याचारित्रं मुनिष्वपि च विश्रुतम् ।
सार्वभौमो नृपः कश्चिद्गृह्णीयात्त्वा न संशयः ॥ २३
तवेदं कुन्तलं स्पृष्टं यतश्चाप्यधुना मया ।
सुगन्धिकुन्तला त्वं तु भविष्यसि ममाज्ञया ॥ २४

स्कन्दः—

सुगन्धिकुन्तला देवीवचः श्रुत्वैवमब्रवीत् ।
कुन्तलेषु च गात्रेषु गन्धयुक्ता त्वमीश्वरि ॥ २५
अद्य मे कुन्तलस्यैव गन्धो दत्तः पराम्बिके ।
सुगन्धिकुन्तलाम्बेति क्षेत्रेऽस्मिन्नपि नाम ते ॥ २६
सदा भवतु विख्यातं दिनादस्माज्जगत्त्रये ।
तव पादे सदा भक्तिं पातिव्रत्यमनुत्तमम् ॥ २७

अदृष्यतां जनेष्वत्र दीर्घमाङ्गल्यकं दिश ।
सुगन्धिकुन्तलाम्बैवं दत्त्वा तस्या वरान् बहून् ॥ २८
तस्या मूर्ध्नि करं दत्त्वा तस्यां मूर्त्यां तिरोऽभवत् ।
गृहं गत्वा च सा कन्या स्वकार्यनिरताभवत् ॥ २९
कुन्तलेऽपि तदा गन्धं दृष्ट्वाश्चर्ययुताभवत् ।
त्रिमाता चण्डिका देवी धनार्थं हीनजातिषु ॥ ३०
विक्रेतुं तां विनिश्चित्य तथा यत्नं चकार ह ।
कदाचित् स सुशीलस्तु काञ्च्यां वै यज्ञकर्मणि ॥ ३१
आहूतश्च नृपेणैव द्विजैः सार्धं स्वयं ययौ ।
हालास्यनगरे पूर्वं विक्रमश्चेति विश्रुतः ॥ ३२
जातश्चन्द्रकुले पाण्ड्यः पुत्रहीनो बभूव ह ।
सुन्दरेशं सुपुत्रार्थं तोषयामास राष्ट्रपः ॥ ३३
दत्त्वा च दर्शनं तस्य प्राह तं सुन्दरेश्वरः ।

सुन्दरेशः—

दीर्घायुषं मूढमतिं दुर्बलं तनयं च वा ॥ ३४
अतिशूरं च धर्मिष्ठं सर्वसद्गुणराजितम् ।
षोडशाब्दवयस्कं वा कं वाञ्छसि वदाधुना ॥ ३५

नृप उवाच—

षोडशाब्दवयोयुक्तं सर्वसद्गुणराजितम् ।
वाञ्छाम्यहं सुतनयं धर्मख्यातिसुवृद्धये ॥ ३६

स्कन्दः—

तथा दत्त्वा वरं शम्भुः सुन्दरेशस्तिरोऽभवत् ।
कालेन सुषुवे राजपत्नी तु तनयं वरम् ॥ ३७
सर्वसद्गुणसंपूर्णं कोटिमन्मथसुन्दरम्
नामधेयं नृपश्चक्रे वीरपाण्ड्येति मङ्गलम् ॥ ३८
स बालो ववृधेऽत्यन्तं शुक्लपक्षे शशी यथा ।
सर्वा विद्याश्च जग्राह बालकस्तु यथाक्रमम् ॥ ३९
वीरपाण्ड्यो दिग्जयं वै चकार रणदुर्जयः ।
चोलादीन् नृपतीन् सर्वांश्चकार करदान् वशी ॥ ४०
पितरं सार्वभौमं स वीरपाण्ड्योऽकरोद्भुवि ।

चतुर्दशाब्दे पुत्रस्य मन्त्रिप्रार्थनया नृपः ॥ ४१
यौवराज्याभिषेकं वै व्यतनोद्विक्रमो मुदा ।
षोडशाब्दे ह्युपक्रान्ते विक्रमः शाङ्करं वरम् ॥ ४२
स्मृत्वा खेदयुतोऽभूच्च कारणं नैव चाब्रवीत् ।
बहवो देशनाथाश्च स्वस्वपुत्रीं विधानतः ॥ ४३
वीराय दातुं राजानं पप्रच्छुर्विनयेन ह ।
वत्सरान्ते च भवतु भवतामीप्सितं क्रमात् ॥ ४४
इत्युक्त्वा नृपवर्यांश्च विक्रमस्तु व्यसर्जयत् ।
वीरः षोडशवर्षान्ते व्याधिना संप्रपीडितः ॥ ४५
मातुरङ्के शिरः स्थाप्य जहौ प्राणान् क्षणेन ह ।
राज्ञीपूर्वाश्च तं दृष्ट्वा प्रासादान्तःपुरस्त्रियः ॥ ४६
हाहाकारं प्रचक्रुश्च रुरुदुर्भृशविह्वलाः ।
राज्ञ्यै तदा सुन्दरशवरं प्राह नृपोत्तमः ॥ ४७
तदा राज्ञी मन्त्रिणं वै प्राह शोकसमन्विता ।
अदृष्ट्वा तनयस्याद्य मङ्गलं जननी ह्यहम् ॥ ४८
नोत्सहे जीवितुं तेन कन्यां रूपगुणान्विताम् ।
विचार्यानीय पुत्रस्य मङ्गलं तु विधानतः ॥ ४९
कारय त्वं मन्त्रिवर नो चेत् प्राणांस्त्यजाम्यहम् ।
ततो मन्त्री वासिताज्यतैले स्थाप्य शवं पुनः ॥ ५०
कोटिनिष्कधनेनैव कन्यां क्रेतुं ययौ ततः ।
दैवयोगात् पर्यटन् स कावेरीतीरमागमत् ॥ ५१
श्रीदक्षिणकुटीद्वीपक्षेत्रमागत्य शोभनाम् ।
पर्णशालां च तत्रस्थां चण्डिकां च ददर्श सः ॥ ५२
जातं वृत्तं निवेद्याह कन्यार्थं स्वं समागतम् ।
सुगन्धिकुन्तलां पुत्रीं गृहीत्वा कोटिनिष्ककम् ॥ ५३
राजपुत्रविवाहार्थं दीयते कन्यका मम ।
इति च्छद्म समाभाष्य मन्त्रिणे प्रददौ हि ताम् ॥ ५४
सोऽपि देवीवरं स्मृत्वा प्रययौ हर्षपूर्वकम् ।
भूषयित्वा नृपसुतं स्थापयित्वा च पीठके ॥ ५५
माङ्गल्यधारणं तस्या मन्त्रपूर्वं विधानतः ।

ब्राह्मण्या कारयामास क्षिप्रं सर्वं समाप्य च ॥ ५६
दत्त्वा च दक्षिणां विप्रांस्ततो मन्त्री व्यसर्जयत् ।
सुगन्धिकुन्तलां बालां सर्वलक्षणसंयुताम् ॥ ५७
दृष्ट्वा राज्ञी सुशोकार्ता रुदती न्यपतद्भुवि ।
जज्ञेऽथ जातवृत्तं तु सा बाला द्विजनन्दिनी ॥ ५८
शवं याने तु संस्थाप्य नृपमन्त्रिपुरोगमाः ।
राज्ञीपूर्वाः स्त्रियश्चापि रुद्रभूमिं ययुस्ततः ॥ ५९
चन्दनागरुकाष्ठैश्च चितां कृत्वा नृपात्मजम् ।
संस्थाप्य वह्निं दत्त्वा च पुरं गन्तुं प्रतस्थिरे ॥ ६०
सुगन्धिकुन्तला बालाभवत्तत्रैव संस्थिता ।
बालाया रक्षणार्थं तु किञ्चिद्दूरे च किंकरान् ॥ ६१
संस्थाप्य मन्त्री सर्वैश्च प्रासादं प्रययौ ततः ।
रात्रौ प्रथमयामे हि जाता तद्दहनक्रिया ॥ ६२
रात्रौ मन्त्री नृपेणैव प्रासादे संस्थितोऽभवत् ।
विप्रकन्या रुदन्ती तु सर्वेषां गमनात् परम् ॥ ६३
उत्थाप्य च चितामध्याद्वृक्षमूले धरातले ।
स्वाङ्के स्थाप्य शिरस्तस्य दृष्ट्वा सर्वाङ्गसुन्दरम् ॥ ६४
विलप्य बहुधा बाला स्वप्रसादप्रदायिनीम् ।
सुगन्धिकुन्तलां शक्तिं तुष्टुवे भावपूर्वकम् ॥ ६५

विप्रकन्या—

केशवादिसेव्यपादयुग्मयुक्तसुन्दरि
देवलोकमर्त्यलोकवासिभक्तकामदे ।
रक्तवस्त्ररत्नभूषणादिशोभिविग्रहे
मे पतिं सुजीवयाद्य हे सुगन्धिकुन्तले ॥ ६६
ब्रह्मशक्तिविष्णुशक्तिसेव्यपार्श्वशोभिते
शम्भुवामपार्श्वगे सुरेन्द्रयोगिसेविते ।
पाशपद्मशोभिबाहुयुग्मके महेश्वरि
मे पतिं सुजीवयाद्य हे सुगन्धिकुन्तले ॥ ६७
दक्षराजपुत्रिके सुसोमराजवल्लभे
सोमनाथराष्ट्रवासिभक्तकामदायिनि ।

व्याधिकाधिपूर्वकोटिदैत्यबृन्दनाशिनि
मे पतिं सुजीवयाद्य हे सुगन्धिकुन्तले ॥ ६८
भण्डदैत्यघातिनि सुमेरुमध्यवासिनि
कामराजवीक्षणेन सृष्टविश्वमण्डले ।
मारजीवदायिनि रतीशतोषकारिणि
मे पतिं सुजीवयाद्य हे सुगन्धिकुन्तले ॥ ६९
सिन्धुदैत्यनाशनाय सूर्यमण्डलोत्थिते
सुन्दरीशवल्लभे गणेशमातृरूपिणि ।
केशवादिदेवबन्धमोचनि गुणेश्वरि
मे पतिं सुजीवयाद्य हे सुगन्धिकुन्तले ॥ ७०
अन्नपूर्णनायिके सुचन्द्रमण्डलोत्थिते
योगिबृन्दपोषिणि सुभक्तराजतोषिणि ।
विश्वनाथडुण्ढिराजमाधवादिसेविते
मे पतिं सुजीवयाद्य हे सुगन्धिकुन्तले ॥ ७१
वह्निकुण्डजातदिव्यरूपदेहसंयुते
चक्रराजमध्यसंस्थबिन्दुपीठवासिनि ।
वल्लभेशबालिकासुशोभिपार्श्वयुग्मके
मे पतिं सुजीवयाद्य हे सुगन्धिकुन्तले ॥ ७२
सर्वलोकनामयुक्तरत्नभूमिवासिनि
केशवेशपादयुक्तमञ्चमध्यतल्पगे ।
लोकनाथवल्लभे परात्परे चिदात्मिके
मे पतिं सुजीवयाद्य हे सुगन्धिकुन्तले ॥ ७३

स्कन्दः—

श्रीशक्तिनरत्वेन युतं वरिष्ठं
यो वा पठेद्भक्तिपुरःसरं वै ।
संप्राप्य भोगान् जनिमृत्युमुक्तः
शक्तेः पदं मुक्तिमयं व्रजेत् सः ॥ ७४

सुगन्धिकुन्तला शक्तिः सर्वलोकैकनायिका ।
स्वयंभूतेन नाथेन तत्र प्रादुरभूत् क्षणात् ॥ ७५
उज्जीवयित्वा तस्यास्तु पतिं वै वीरपाण्ड्यकम् ।

तदारभ्यायुतं वर्षमायुर्दत्त्वा तयोरपि ॥ ७६
आलिङ्ग्य विप्रपुत्रीं तां तिरोऽभूत्तत्क्षणेन च ।
उत्थाय राजपुत्रस्तु जातं सर्वमशेषतः ॥ ७७
भार्यामुखाच्च स श्रुत्वा बभूवानन्दसंयुतः ।
आलिङ्ग्य भार्यां तां प्रेम्णा रात्रिशेषं तु तत्र वै ॥ ७८
उवास भार्यया सार्धं भाषमाणस्तया सह ।
तत्र स्थापितभृत्यैश्च जीवितं विप्रकन्यया ॥ ७९
पुत्रं श्रुत्वा नृपः सर्वं रुद्रभूमिं जगाम ह ।
आरोप्य रथवर्ये तौ प्रासादं प्रविवेश च ॥ ८०
सुगन्धि विप्रतनयां सावित्रीमिति वै जनाः ।
तुष्टुवुश्च पुना राजा कारयामास मङ्गलम् ॥ ८१
वीरपाण्ड्यो भार्यया स बुभुजे दिव्यभोगकान् ।
देवीभक्तिं विशेषेण चकार विधिपूर्वकम् ॥ ८२
श्रीदक्षिणकुटीद्वीपे प्रतिवर्षं स्वभार्यया ।
पुपूजे वेदमन्त्रैश्च ब्राह्मणानां प्रतोषणैः ॥ ८३
अयुतं वत्सरान् भूम्यां भार्यया यौवनान्वितः ।
सार्वभौमश्रियं भुक्त्वा राज्यं स्थाप्य स्वपुत्रके ॥ ८४
देवीलोकं गन्तुकामो भार्यां प्राह स्वकाशयम् ।
सुगन्धिकुन्तलां देवीमस्मार्षीत्तस्य वल्लभा ॥ ८५
ज्योतीरूपं यानवरं देवीलोकात् समागतम् ।
आरुह्य च मणिद्वीपं जग्मतुस्तौ मुदान्वितौ ॥ ८६
सारूप्यं सा पराशक्तेः संप्राप नृपवल्लभा ।
वीरपाण्ड्यः शंकरस्य प्राप सर्वसुदुर्लभम् ॥ ८७

॥ इति श्रीदक्षिणकुटीद्वीपक्षेत्रमाहात्म्ये सुगन्धिकन्यकापतिसञ्जीवनं नाम द्वात्रिंशोऽध्यायः ॥

## ॥ अथ त्रयस्त्रिंशोऽध्यायः [विधिगर्वभङ्गः] ॥

स्कन्दः—

कदाचिद्देवमुख्याश्च वह्नीन्द्रार्कपुरोगमाः ।

भृगुदक्षप्रभृतयो मुनयो ब्रह्मपुत्रकाः ॥ १
गोष्ठीं कृत्वा नारदं संपूज्याहुर्भक्तिपूर्वकम् ।
देवादयः—
ब्रह्मा विष्णुश्च रुद्रश्च शक्तिः सूर्यो गणेश्वरः ॥ २
वर्ण्यन्ते ब्रह्मरूपेण वेदादिषु विशेषतः ।
तथापि स्वस्वकार्येषु कुशलाः सन्ति विष्टपे ॥ ३
सृष्टौ समर्थो ब्रह्मैव पालने कमलापतिः ।
संहारे तु महारुद्रो मोहने भुवनेश्वरी ॥ ४
गणेशो विघ्नहनने सूर्यः कालप्रदर्शने ।
ब्रह्मवत् सृष्टिकरणे न शक्ता विष्णुपूर्वकाः ॥ ५
सृष्ट्यादिसर्वशक्त्याढ्यः स्वतन्त्रः को वदाधुना ।
नारदः—
प्रष्टव्यः परमेष्ठी तु वेदानां जनकः प्रभुः ॥ ६
देवर्षयस्तदा सर्वे तुष्टुवुः पद्मसंभवम् ।
आजगाम ततो ब्रह्मा वेदाद्यैः परिसेवितः ॥ ७
सर्वे पूर्वप्रश्नकं च चक्रुर्ब्रह्माणमेव हि ।
तानाह पद्मजो हृष्टो गर्वेण महता युतः ॥ ८
ब्रह्मोवाच—
अहमेव परं ब्रह्म परमेशोऽहमेव च ।
करोमि सृष्टिमेवाहं पालनादीनि वै ततः ॥ ९
मम वक्त्राद्धरिर्जातः स्थापितः पालने मया ।
भ्रूमध्यादभवद्रुद्रो हनने स्थापितो मया ॥ १०
नेत्राद्भानुश्च सञ्जातः कर्माधारे नियोजितः ।
शक्तिर्हिमवतः पुत्री पौत्री मे रुद्रवल्लभा ॥ ११
शक्तिपुत्रो गणेशानो मया विघ्नाधिपत्यके ।
स्थापितस्तेन सर्वेषां कारणं त्वहमेव हि ॥ १२
अहमेव स्वयंभूः स्यामन्येषां कारणं त्वहम् ।
स्कन्दः—
एवं ब्रह्मवचः श्रुत्वा दधीचिः प्रावदत्तदा ॥ १३
दधीचिः—
त्वं ब्रह्मन् मोहयुक्तोऽसि करोषि स्वात्मशंसनम् ।

सर्वेषां कारणं ब्रह्म परमात्मा परः शिवः ॥ १४
उमा हैमवती ब्रह्मशक्तिर्विश्वविमोहिनी ।
सौरमण्डलमध्यस्थो हिरण्यपुरुषो रविः ॥ १५
शिवांशसंभवश्चायं भवत्येव तवात्मजः ।
ब्रह्मविष्णुमहेशानाः कृत्यत्रयविधायकाः ॥ १६
शिवस्य तनया ज्ञेयास्तद्गुणत्रयसंभवाः ।
साक्षादात्मा महेशस्य तनयो विघ्ननायकः ॥ १७
शिवपार्श्वे सदासंस्थः शान्तियोगप्रधारकः ।
सर्वेषां कारणं शम्भुर्विश्वातीतः परः शिवः ॥ १८

स्कन्दः—

श्रुत्वा दधीचिवचनं क्रोधेन विधिरब्रवीत् ।

विधिः—

शंभुस्त्वयोक्तो रुद्रः स्याच्चैकोऽयं रुद्रकोटिषु ॥ १९
वक्त्रपञ्चकसंयुक्तः कथं रुद्रः परो भवेत् ।
इत्युक्त्वा पञ्चमं वक्त्रं स्वात्मनश्च ससर्ज सः ॥ २०
पञ्चमेनैव वक्त्रेण दधीचिं पुनरब्रवीत् ।
श्मशानवासी रुद्रोऽयं पिशाचैश्च समावृतः ॥ २१
अस्थिमालाधरो भिक्षुस्तमोगुणविराजितः ।
देवपङ्क्तिषु दूष्योऽयं जगदीशः कथं भवेत् ॥ २२
पीडितो दक्षशापेन यज्ञभागविवर्जितः ।
ब्रह्मणो दूषणं चेत्थं श्रुत्वा कोपसमन्विताः ॥ २३
सञ्जाताः शाम्भवाः कण्वपूर्वा अपि मुनीश्वराः ।
ब्रह्मणो गर्वनाशार्थमथर्वशिरसा शिवम् ॥ २४
तुष्टुवुः परमेशानो ज्योतीरूपसमन्वितः ।
आविरासीत्तदा रुद्रं हरं कालाग्निसंज्ञकम् ॥ २५
आहूय तं जगादैव पातालभवने स्थितम् ।

शिवः—

छिन्धि तस्य शिरो रुद्र ब्रह्मणः पञ्चमं महत् ॥ २६
शिवाज्ञां शिरसा धृत्वा रुद्रो भैरवरूपवान् ।
उज्जहार ब्रह्मणश्च प्राणैः सह शिरस्तदा ॥ २७

मृतोऽभवत्तदा ब्रह्मा देवैश्च प्रार्थितः शिवः ।
जीवयित्वा चतुर्वक्त्रं सरुद्रश्च तिरोऽभवत् ॥ २८
ततो ब्रह्मा दुःखयुक्तः स्वस्थलं प्राप योगिभिः ।
प्रारेभे जगतः सृष्टिं सृष्टिर्नैव बभूव ह ॥ २९
सृष्टिशक्त्या विरहितः सत्यसंकल्पवर्जितः ।
जीवतुल्यो बभूवायं नापश्यत् कार्यजातकम् ॥ ३०
ततः क्षीराब्धिमगमद्विष्णोः सर्वं न्यवेदयत् ।
शिवस्य चापराधेन निन्दया शंकरस्य च ॥ ३१
सत्यसंकल्परहितः सृष्टिसत्ताविवर्जितः ।
सञ्जातो जीवतुल्यस्त्वं सत्यसंकल्पसिद्धये ॥ ३२
सृष्टिशक्तिं पुनः प्राप्तुं परमेशं सदाशिवम् ।
तपसा तोषय त्वं तु पञ्चाक्षरविधानतः ॥ ३३
दण्डके विपिने रम्ये कावेर्या दक्षिणे तटे ।
श्रीदक्षिणकुटीद्वीपं क्षेत्रं स्वायंभुवं वरम् ॥ ३४
विराजते महालिङ्गं स्वयंभूतं महोमयम् ।
तत्र गत्वा महेशानं तपसा परितोषय ॥ ३५

स्कन्दः—

एवं श्रुत्वा विष्णुमुखाद्ब्रह्मा हर्षसमन्वितः ।
श्रीदक्षिणकुटीद्वीपं गत्वा च पशुतीर्थके ॥ ३६
स्नात्वा लिङ्गं सुसंपूज्य जपन् पञ्चाक्षरं मनुम् ।
जितेन्द्रियो निराहारस्तपश्चक्रेऽतिदारुणम् ॥ ३७
ततो वर्षशतान्ते तु वृषारूढोऽम्बिकापतिः ।
देवः पशुपतिर्हृष्टो ब्रह्माणं प्रावदत्तदा ॥ ३८

पशुपतिरुवाच—

विघ्नेन पीडितस्त्वं हि सृष्टिशक्तिविवर्जितः ।
सत्यसंकल्परहितो जातोऽसि मम दूषणात् ॥ ३९
गर्वेण महता युक्तो राजसे पद्मसंभव ।
मे दूषणेन मे पुत्रो विघ्नेशः कोपसंयुतः ॥ ४०
चक्रे विघ्नमतो ब्रह्मन् सृष्टिसत्ताविवर्जितः ।
सत्यसंकल्परहितो जातस्त्वं जीववत् स्वयम् ॥ ४१
एकाक्षरेण मनुना मम पुत्रं प्रतोषय ।

ततो विघ्नविनिर्मुक्तः सृष्टिशक्तिमवाप्स्यसि ॥ ४२
इत्युक्त्वा ब्रह्मणे शम्भुरेकार्णं मन्त्रमादिशत् ।
शिवालयाद्बहिर्देशे स्थित्वा ब्रह्मा मुदान्वितः ॥ ४३
एकाक्षरेण मनुना विघ्नेशं समतोषयत् ।
वत्सरान्ते गणेशानः सिन्दूराङ्कितमस्तकः ॥ ४४
आविरासीत् पुरस्तस्य गौरीगर्भसमुद्भवः ।
नत्वा स्तुत्वा गणेशानं सूक्तैर्गाणपतैर्वरैः ॥ ४५
निर्विघ्नां सृष्टिमतुलां सत्यसंकल्पतां तथा ।
प्रार्थयामास विघ्नेशं गणेशः करुणायुतः ॥ ४६
तथा दत्त्वा तिरोऽभूच्च मनसा कल्पितैर्वरैः ।
पुपूजे च गणेशानं प्रतिष्ठाप्य पितामहः ॥ ४७
सिन्दूरगणपश्चेति दत्त्वा नाम पितामहः ।
नत्वा संपूज्य वरदं देवं पशुपतिं हरम् ॥ ४८
ब्रह्मलोक स संप्राप्य सृष्टिं चक्रे हि पूर्ववत् ।
इदं यः पठते मर्त्यो विघ्नमुक्तो भविष्यति ॥ ४९

॥ इति श्रीदक्षिणकुटीद्वीपक्षेत्रमाहात्म्ये विधिगर्वभङ्गो नाम त्रयस्त्रिंशोऽध्यायः ॥

## ॥ अथ चतुस्त्रिंशोऽध्यायः [ विष्णुचोलमहारोगप्रशमनम् ] ॥

सनत्कुमारः—

सोमास्कन्दमहेशस्य स्थले तस्मिन् वद प्रभो ।
माहात्म्यं केन सा मूर्तिः स्थापिता वद षण्मुख ॥ १

स्कन्दः—

काञ्चीपुरे नृपोऽभूच्च सत्यचोल इति स्मृतः ।
त्रयस्तस्य सुता जाता रूपवीर्यगुणान्विताः ॥ २
ज्येष्ठस्तु रुद्रचोलः स्याद्विष्णुचोलो द्वितीयकः ।
ब्रह्मचोलः कनिष्ठः स्याद्विष्णुचोलोऽथ मध्यमः ॥ ३
द्वादशाब्दे कुष्ठरोगयुतोऽभूद्दिव्यदेहवान् ।
पदे पदे च पितरौ भ्रातरौ रोगपीडितम् ॥ ४

उदासीनं च धिक्कारं चक्रतुस्तेन बालकः ।
त्यक्त्वा गेहं स संप्राप भीतिदं दण्डकावनम् ॥ ५
वन्याहारपरो भूत्वा तीर्थाटनपरः स्वयम् ।
भ्रमन् वनेषु संप्राप पूर्वपुण्यप्रभावतः ॥ ६
श्रीदक्षिणकुटीद्वीपं वसिष्ठाश्रममुत्तमम् ।
स्नात्वा कवेरजातोये पशुतीर्थे सरोवरे ॥ ७
स्नात्वा गणेशं संपूज्य सिन्दूराङ्कितमस्तकम् ।
प्रतिष्ठितं पद्मजेन ततः प्राप शिवालयम् ॥ ८
वसिष्ठेशं महालिङ्गं पुपूजे विधिपूर्वकम् ।
अलर्केण नृपेन्द्रेण स्थापितां मूर्तिमुत्तमाम् ॥ ९
विटङ्केशख्यातियुतां गौरीस्कन्दसमन्विताम् ।
पुपूजे मूर्तिमतुलां सरोजातैश्च ह्लकैः ॥ १०
बद्धाञ्जलिपुटो भूत्वा तुष्टुवे भक्तितत्परः ।

विष्णुचोलः—

भूमीन्द्रेण सुपूजितं निजमनोवाञ्छाप्तये ह्लकै-
स्तप्तस्वर्णसमानकान्तिरुचिरं नेत्रत्रयोद्भासितम् ।
नानालङ्करणैः सुपीतवसनैर्युक्तं विटङ्केश्वरं
ध्याये देव घृणानिधे पशुपते रोगार्दितं पाहि माम् ॥ ११
कैलासाचलवासिनं निजगणैर्गौर्या युतं शङ्करं
विष्णुब्रह्मसुरेन्द्रदेवनिकरैः संपूजितं सिद्धये ।
भक्तारिष्टविनाशकं गुहशिवायुक्तं विटङ्केश्वरं
ध्याये देव घृणानिधे पशुपते रोगार्दितं पाहि माम् ॥ १२
वामाङ्गात् कमलापतिं च निटिलाच्छ्रीकालरुद्रं हरं
चाजं दक्षिणभागतः परशिवो यो वै ससर्जैव तम् ।
विश्वातीततुरीयमीशमनघं शम्भुं विटङ्केश्वरं
ध्याये देव घृणानिधे पशुपते रोगार्दितं पाहि माम् ॥ १३
कावेर्या अपि दक्षिणे भुवि तले श्रीशुद्धसत्त्वात्मके
स्वायंभूतमहोमये वनगते श्रीदक्षिणद्वीपके ।
सुस्थं देवमुनीश्वरादिनुदितं शम्भुं विटङ्केश्वरं
ध्याये देव घृणानिधे पशुपते रोगार्दितं पाहि माम् ॥ १४

देवेशानवसिष्ठकेशवमुखैः संपूजितं कामदं
नानासिद्धिविधायकं मृतिहरं मृत्युञ्जयं ज्ञानदम् ।
भक्ताभीष्टफलप्रदं गुहयुतं शम्भुं विटङ्केश्वरं
ध्याये देव घृणानिधे पशुपते रोगार्दितं पाहि माम् ॥ १५

शैले कल्पकमूलके मणिमये सिंहासने संस्थितं
वामे शक्तियुतं गुहेन सहितं मध्ये द्वयोः शङ्करम् ।
नानाभूषणभूषितं शशिधरं शम्भुं विटङ्केश्वरं
ध्याये देव घृणानिधे पशुपते रोगार्दितं पाहि माम् ॥ १६

श्रीमद्दक्षिणभागके कुटिमये द्वीपे वसिष्ठाश्रमे
देवैर्मानवपूर्वकैश्च पशुभिः संपूजितं सिद्धये ।
शेषेणापि च कार्तवीर्यकमुखैश्चालर्कभूपेन वै
ध्याये देव घृणानिधे पशुपते रोगार्दितं पाहि माम् ॥ १७

शङ्खेनैव सुनागराजमुनिना लब्धुं सुतां मृत्युगां
पूर्वावस्थमदालसां च शिवया संपूजितो यो ददौ ।
तं देवं सुरपं वसिष्ठमुनिना संपूजितं सर्वदा
ध्याये देव घृणानिधे पशुपते रोगार्दितं पाहि माम् ॥ १८

स्कन्दः—

स्तोत्रं रोगविनाशकं पशुपतेर्यो वा नरो भावतो
नित्यं वा रविवासरे पशुपतेर्लिङ्गस्य वा सन्निधौ ।
भक्त्या भावपुरस्सरं तु पठते मुक्तः स रोगाद्भयात्
संप्राप्येह सुखं सुतादिलसितं कैलासलोकं व्रजेत् ॥ १९

स्तुत्या तुष्टो विटङ्केशो गौरीस्कन्दसमन्वितः ।
आविरासीत् पुरस्तस्य विष्णुब्रह्मादिभिर्नुतः ॥ २०

रोगान्मुक्तो नृपसुतो विटङ्केशस्य दर्शनात् ।
मारस्य सदृशं रूपं संप्राप विभुवीक्षणात् ॥ २१

विटङ्केशं नृपसुतो नत्वा नत्वा पुनः पुनः ।
आनन्दाश्रूणि मुञ्चन् स नेत्राभ्यां परमेश्वरम् ॥ २२

तुष्टाव रुद्रसूक्तैश्च ननर्तानन्दसंयुतः ।
उवाच तं विटङ्केशो दत्त्वा मूर्ध्नि कराम्बुजम् ॥ २३

भो विष्णुचोल भक्ताग्र्य गृहाण परशुं मम ।
अनेन च रिपून् जित्वा सार्वभौमो भविष्यसि ॥ २४
शैवमार्गं धरण्यां त्वं स्थापयिष्यसि भक्तिमान् ।
दिव्यभोगांश्च भुक्त्वा त्वं देहान्ते तु सरूपताम् ॥ २५
संप्राप्य मम लोके त्वं नन्द्याद्यैश्च भविष्यसि ।
पुनर्नत्वा महादेवं प्रार्थयामास भक्तिमान् ॥ २६

विष्णुचोलः—

कृत्तिकापूर्णिमायां तु भानुवारे महेश्वर ।
अद्य दत्तं दर्शनं मे भवता परमेश्वर ॥ २७
नीरोगमूर्तिः संप्राप्ता वरा लब्धाः सुदुर्लभाः ।
कृत्तिकापूर्णिमायां वा कृत्तिकाभानुवासरे ॥ २८
भानुवारे पूर्णिमायां कृत्तिकामासि शंकर ।
स्नानं कुर्वन्ति ये भक्त्या पशुतीर्थे सरोवरे ॥ २९
चक्रतीर्थेऽथवा तेषां ध्वंसन्तां पातकानि वै ।
धर्मार्थकाममोक्षांश्च लभन्तां तव दर्शनात् ॥ ३०
एवं तत्प्रार्थनां श्रुत्वा तथा दत्त्वा महेश्वरः ।
विटङ्केशस्तिरोऽभूच्च विष्णुचोलो मुदान्वितः ॥ ३१
अतीव तुष्टहृदयः स्वराज्यं प्रययौ क्रमात् ।
ननाम पितरौ भक्त्या प्रावादीद्वृत्तमादितः ॥ ३२
कलिङ्गराजतनयां पर्यणैषीत् स्वयंवरे ।
दिग्जयं च ततः कृत्वा परशुना शिवभक्तिमान् ॥ ३३
पितरं सार्वभौमं स चकार करदान् नृपान् ।
विष्णुचोलाय राज्यं तु पिता प्रीत्या ददौ ततः ॥ ३४
शैवमार्गं तु सर्वत्र स्थापयामास राष्ट्रपः ।
श्रीदक्षिणकुटीद्वीपं गत्वा राजा पदे पदे ॥ ३५
सोमास्कन्दमहेशस्य चकार हि महोत्सवम् ।
ततो वर्षसहस्रान्ते कैलासभवनं ययौ ॥ ३६
संप्राप शिवसारूप्यं विष्णुचोलो नृपोत्तमः ।
सोमास्कन्दस्य महिमा क्षेत्रेऽस्मिन् संप्रहान्मया ॥ ३७

अथ ते कथितं योगिन् किमन्यच्छ्रोतुमिच्छसि ।

॥ इति श्रीदक्षिणकुटीद्वीपक्षेत्रमाहात्म्ये विष्णुचोलमहारोगप्रशमनं नाम चतुस्त्रिंशोऽध्यायः ॥

---

## ॥ अथ पञ्चत्रिंशोऽध्यायः [मङ्गलासौमङ्गल्यावाप्तिः] ॥

सनत्कुमारः—

भूयोऽपि शक्तिमाहात्म्यं स्थले तस्मिन् वद प्रभो ।

स्कन्द उवाच—

कुम्भघोणे महाक्षेत्रे कावेर्योरपि मध्यगे ॥ १

सन्निधौ कुम्भनाथस्य ब्राह्मणो वेदपारगः ।

शिवभक्तिरतो भूत्वा शिवपूजां चकार ह ॥ २

तस्य शिष्यः सोमनाथो वैश्येशो धनवान् गुणी ।

वाणिज्यवृत्तिसंयुक्तो देवद्विजपरायणः ॥ ३

देवालयस्योत्तरे तु दिव्यगेहेऽवसच्च सः ।

तस्य पत्नी तु कमला गुणरूपसमन्विता ॥ ४

सदा पतिपरा साध्वी देवद्विजपरायणा ।

तयोश्च पुत्री पुत्रश्च सञ्जातौ च यथाक्रमम् ॥ ५

पुत्री रूपगुणोपेता गुरुं विप्रमुपाश्रिता ।

जग्राह विद्या विधिना देवीमन्त्रं नवाक्षरम् ॥ ६

संप्राप ब्राह्मणात् सा तु सप्तमाब्दे विधानतः ।

मङ्गला चेति नामास्याश्चक्रतुः पितरौ मुदा ॥ ७

कदाचिद्ब्राह्मणः कश्चिन्मध्यार्जुननिवासकृत् ।

सोमनाथगृहं प्राप पूजितस्तेन स द्विजः ॥ ८

भुक्त्वा स्वस्य ज्योतिषे तु पाण्डित्यं प्रावदत्तदा ।

स्वस्य भार्यापुत्रकाणां पुत्र्याश्चापि यथाक्रमम् ॥ ९

प्रदाय विप्रवर्याय जन्मकालस्य पत्रिकाम् ।

शुभाशुभं च पप्रच्छ सर्वं प्राह द्विजोत्तमः ॥ १०

मङ्गलाजातकं दृष्ट्वा मुञ्चन्नश्रूणि नेत्रतः ।

उवाच सोमनाथं तं ब्राह्मणो गणकोत्तमः ॥ ११

इयं ते तनया साध्वी षोडशाब्दे तु वैश्यज ।
विधवा च भवेदेव सत्यमेतन्न संशयः ॥ १२
वैधव्याद्यदि मुक्ता स्याद्यक्षेशश्रीसमन्विता ।
दीर्घमाङ्गल्यसंयुक्ता भर्तृभोगसमन्विता ॥ १३
पुत्रपौत्रादिसौख्यं वै भुक्त्वा मुक्तिमवाप्नुयात् ।

स्कन्दः—

इत्युक्त्वा ब्राह्मणस्तं वै गृहीत्वा बहुलं धनम् ॥ १४
स्वस्थानमगमद्धृष्टो वैश्यो दुःखयुतोऽभवत् ।
विप्रवाक्यं मङ्गला तु श्रुत्वा धैर्यसमन्विता ॥ १५
सान्त्वयामास पितरं विधिर्वै बलवानिति ।
मङ्गला वैश्यकन्या तु प्रत्यहं शक्तिसन्निधौ ॥ १६
स्थित्वा शक्तिं प्रपूज्यैव जजाप च नवाक्षरम् ।
श्रीदक्षिणकुटीद्वीपवैश्यपुत्राय धीमते ॥ १७
स्वपुत्रीं विधिना प्रादाद्युवती भर्तृतत्परा ।
भर्तृगेहं गता साध्वी गृहकृत्यपरायणा ॥ १८
नित्यं देव्यालयं गत्वा पुपूजे परदेवताम् ।
नवाक्षरमनुं जप्त्वा नत्वा देवीं गृहं व्रजेत् ॥ १९
षोडशाब्दे मङ्गलाया मङ्गला श्रद्धयान्विता ।
विप्रवाक्यं स्मरन्ती तु व्रतपूजापरायणा ॥ २०
नवाक्षरीं शक्तिविद्यां भावपूर्वं जजाप ह ।
पूर्णिमायां निशि तदा वैश्यो बालोऽथ तत्पतिः ॥ २१
धीमानिति च विख्यातो देहोपाधिसमन्वितः ।
उत्थाय शयनात्तत्र बहिर्गत्वा सपात्रकः ॥ २२
देहोपाधिं निवर्त्यैव शुद्धिं चक्रे यथाक्रमम् ।
तदा यक्षः समागत्य क्षुधार्तो वैश्यनन्दनम् ॥ २३
हस्ते जग्राह तं दृष्ट्वा युवा वैश्यो भयान्वितः ।
सामवाक्यैश्च तं यक्षं सान्त्वयामास युक्तिभिः ॥ २४
नाङ्गीचक्रे तदा यक्षो प्रारेभे भोक्तुमेव तम् ।
उवाच यक्षं तं नत्वा सधैर्यं वैश्यनन्दनः ॥ २५

वैश्यः—

मम भार्या रूपवती युवती धर्मचारिणी ।
गृहं गत्वा समाश्वास्य क्षिप्रं तां भोजनाय ते ॥ २६
आगमिष्ये न सन्देहः शपथेन वदाम्यहम् ।
इत्युक्ता तं ननामैव गन्तुमाज्ञां ददौ च सः ॥ २७
गृहं गत्वा तु धीमान् स जातं वृत्तं यथाक्रमम् ।
मङ्गलायै प्रावदच्च मङ्गला हृदयाम्बुजे ॥ २८
ध्यात्वा तुष्टाव जगतां मातरं भुवनेश्वरीम् ।

मङ्गला—

लोकानां जननीं परात् परतरां ब्रह्मात्मिकां चिन्मयीं
सत्यानन्दसुविग्रहां गुणधरां नैर्गुण्यभावान्विताम् ।
स्वात्मानन्दमयीं द्विभावरहितां तेजोमयीं भावये
वैधव्यात् परिपालयाद्य जगतां मातः शिवे सुन्दरि ॥ २९
योगाकारशरीरिणीं हृदयके बुद्धौ सदा वासिनीं
मूलाधारकचक्रके फणिमयीं फाले सुधारूपिणीम् ।
ज्योतीरूपधरां सहस्रकमले विद्युन्मयीं भावये
वैधव्यात् परिपालयाद्य जगतां मातः शिवे सुन्दरि ॥ ३०
सत्यज्ञानमयीं गुणादिरहितां विद्यात्मिकां बोधदां
तत्त्वंचासिपदात्मिकां निजमयीं संयोगमायात्मिकाम् ।
नानायोगिजनाश्रितां निजजनाभीष्टप्रदां भावये
वैधव्यात् परिपालयाद्य जगतां मातः शिवे सुन्दरि ॥ ३१
ओंकारात्मकविग्रहां महिमगां त्रैगुण्यशान्त्यात्मिकां
लोकानां जननीं चतुर्विधमहाविश्वात्मिकां भूतिदाम् ।
मायामायिकभेदबोधजननीं चित्ते सदा भावये
वैधव्यात् परिपालयाद्य जगतां मातः शिवे सुन्दरि ॥ ३२
नादाकारशरीरिणीं गजमयीं श्रीशुद्धसत्त्वात्मिकां
सृष्ट्वा सर्जनकालके निजदृशा युक्ता तया चिन्मयी ।
प्रोक्ता या भुवनेश्वरीति निगमे शक्तिं परां भावये
वैधव्यात् परिपालयाद्य जगतां मातः शिवे सुन्दरि ॥ ३३

अव्यक्तां तु तमोमयीं गुणधरामास्थाय या चिन्मयी
तत्त्वानामपि कारणं त्विति सदा वेदादिभिर्गीयते ।
तां देवीं शिववल्लभां सुरनुतां शक्तिं परां भावये
वैधव्यात् परिपालयाद्य जगतां मातः शिवे सुन्दरि ॥ ३४
जाग्रद्ब्रह्ममयीमुमां हिमवतः पुत्रीं तु विद्यात्मिकां
विघ्नेशानकुमारदेवजननीं शम्भोः प्रियां पार्वतीम् ।
दुर्गारूपधरां सुरारिशमनीं शक्तिं परां भावये
वैधव्यात् परिपालयाद्य जगतां मातः शिवे सुन्दरि ॥ ३५
श्रीवामान्यकुटीरकाभिधवरद्वीपे स्वयंभूतके
संस्थां शंकरवल्लभां श्रुतिनुतां केशादिभिः पूजिताम् ।
देवीं गन्धसुकुन्तलां शिवसतीं लोकेश्वरीं भावये
वैधव्यात् परिपालयाद्य जगतां मातः शिवे सुन्दरि ॥ ३६

स्कन्दः—

स्तोत्रं शक्तिसुतोषदं श्रुतिमयं श्रीमङ्गलाकीर्तितं
यो वा भक्तिपुरःसरं तु पठते शक्तेर्मुदा सन्निधौ ।
तीर्त्वा मृत्युभयं सुतादिलसितः संप्राप्य दीर्घायुषं
देवीलोकमनन्तवैभवयुतं संप्राप्नुयान्निश्चितम् ॥ ३७
सुगन्धिकुन्तलाम्बा सा स्तुत्या तुष्टा परा भृशम् ।
नायिका सर्वलोकानां मङ्गलापुरतस्तदा ॥ ३८
आविरासीत् परंज्योतीरूपिणी दिव्यभूषणा ।
आलिङ्ग्य मङ्गलां तां तु मूर्धन्याघ्राय चाम्बिका ॥ ३९
वत्सेऽद्य दत्तं तुभ्यं तद्दीर्घमाङ्गल्यमुत्तमम् ।
इतः परं लक्षवर्षं यक्षेशश्रीसमन्विता ॥ ४०
यौवनाढ्यस्वभर्त्रा त्वं नित्ययौवनसंयुता ।
भुङ्क्ष्व भोगान् पुत्रपौत्रपुत्रीदौहित्रशोभिता ॥ ४१
मित्रबान्धवसंयुक्ता देहान्ते सर्वदुर्लभम् ।
भर्त्रा साकं मणिद्वीपं लप्स्यसे नात्र संशयः ॥ ४२
लोके ते कीर्तिसंसिद्ध्यै तव नामपुरस्सरम् ।
तिष्ठाम्यस्मिन् क्षेत्रवरे नाम्नाहं मङ्गलेश्वरी ॥ ४३
त्वदीयस्मरणादेव दर्शनं ते ददाम्यहम् ।

साकं भर्त्रा यक्षराजं गत्वा भस्म त्विदं प्रिये ॥ ४४
प्रक्षिप त्वं यक्षराजस्त्यक्त्वा स तु पतिं तव ।
गच्छेच्छापविनिर्मुक्तो देवलोकं ततः परम् ॥ ४५
भर्त्रागत्य सुखेन त्वं भुङ्क्ष्व भोगान् यथेप्सितान् ।
इत्युक्त्वा भस्म तद्धस्ते दत्त्वा शक्तिस्तिरोऽभवत् ॥ ४६
सा तु भर्त्रा यक्षपार्श्वं प्रययौ वैश्यनन्दनः ।
आगतोऽहं यक्षराज भुङ्क्ष्व मामिति चाब्रवीत् ॥ ४७
प्राक्षिपन्मङ्गला भस्म यक्षस्योपरि तत्क्षणम् ।
शापमुक्तो यक्षराजस्तयोर्दत्त्वाशिषं मुदा ॥ ४८
स्वर्गलोकं ययौ हृष्टो दिव्यदेहसमन्वितः ।
स्वभर्त्रा मङ्गला गेहं संप्राप्य मुदमाप ह ॥ ४९
इदं वृत्तं पुरस्थैश्च बान्धवैरपि देशगैः ।
विज्ञातं च श्रुतं चासीन्मङ्गलां परदेवताम् ॥ ५०
इति मत्वा जनाः सर्वे तुष्टुवुर्भक्तिसंयुताः ।
मङ्गलायाश्च पितरौ समागत्य च तत्र वै ॥ ५१
सञ्जातमखिलं श्रुत्वा समालिङ्ग्य च मङ्गलाम् ।
आनन्दह्रदमग्नौ च सञ्जातौ बान्धवैः सह ॥ ५२
मङ्गलेशीं तदारभ्य वैधव्यविनिवृत्तये ।
दीर्घमाङ्गल्यसिद्ध्यर्थं मुदा नार्यो भजन्ति ह ॥ ५३
मङ्गला पूर्ववद्देवीमभजत् सर्वभावतः ।
भुक्त्वा भोगाँल्लक्षवर्षं मणिद्वीपमगाच्च सः ॥ ५४
एवं ते मङ्गलेश्वर्या माहात्म्यं परिकीर्तितम् ।
पठनाच्छ्रवणाच्चापि दीर्घायुष्यप्रदायकम् ॥ ५५

॥ इति श्रीदक्षिणकुटीद्वीपक्षेत्रमाहात्म्ये मङ्गलासौमङ्गल्यावाप्तिर्नाम पञ्चत्रिंशोऽध्यायः ॥

## अथ षट्त्रिंशोऽध्यायः [स्कन्दशापविमोकः] ॥

सनत्कुमारः—

शिरश्छेदं ब्रह्मणश्च हरः कृत्वा तु भैरवः ।

ततः किमकरोद्देवो ब्रूहि तद्गिरिजासुत ॥ १

स्कन्दः—

ब्रह्महत्यापीडितोऽयं भैरवः संबभूव ह ।
कपालं ब्रह्मशिरसो हस्तलग्नमभूद्दृढम् ॥ २
ब्रह्महत्या पृष्ठतस्तमन्वगाद्घोररूपिणी ।
काशीं गत्वा भैरवस्तु क्षेत्रसंन्यासिनं मुनिम् ॥ ३
जैगीषव्यं तु पप्रच्छ ब्रह्महत्याविमोचने ।
उपायं तं तु स प्राह स्कन्दशिष्यो महामुनिः ॥ ४

जैगीषव्यः—

दण्डकारण्यके चोले राष्ट्रे वै सह्यजातटे ।
स्वयंभूतस्थलवरं स्वयंज्योतिःस्वरूपकम् ॥ ५
श्रीदक्षिणकुटीद्वीपमिति ख्यातं जगत्त्रये ।
वसिष्ठाश्रममित्येव विश्रुतं स्थलमुत्तमम् ॥ ६
बहवस्तत्र संपूज्य वसिष्ठेशं सदाशिवम् ।
स्वयंभूतेश्वरं भक्त्या लेभिरे वाञ्छितान् वरान् ॥ ७
स्कन्दः शम्भुसुतश्चापि शिवशापमवाप्य च ।
तत्र शम्भुं समाराध्य शापान्मुक्तो बभूव ह ॥ ८
अतस्त्वं तत्र गच्छाद्य ब्रह्महत्याविमुक्तये ।

भैरवः—

कदा किमर्थं पुत्रं तु शशाप परमेश्वरः ॥ ९
तन्मे त्वं विस्तराद्ब्रूहि स्कन्दशिष्य मुनीश्वर ।

जैगीषव्य उवाच—

आदिसर्गे महादेवो ब्रह्माण्डं तु हिरण्मयम् ॥ १०
पाञ्चभौतिकरूपं तु तत्त्वैः साकं यथाक्रमम् ।
जगतां सृष्टिसंहाररक्षणार्थं गुणात्मकान् ॥ ११
ब्रह्मविष्णुमहेशांश्च ससर्ज निजवीक्षणात् ।
सृष्टिं स्थितिं च संहारं चक्रुश्च जगतां च ते ॥ १२
ब्रह्माण्डादूर्ध्वभागे तु महाकैलाससंज्ञकम् ।
अप्राकृतं स्वयंज्योतिर्मयं गोलं ससर्ज च ॥ १३
वामभागात् पराशक्तिं मूर्तियुक्तां चतुर्भुजाम् ।
मूर्ध्नो गणेशं तनयं हृदयाच्च षडाननम् ॥ १४

नन्द्यादिगणपान् सर्वान् खेलनाय ससर्ज च ।
एवं शक्त्या च पुत्राभ्यां गणैरपि परः शिवः ॥ १५
तत्र वासं करोत्येव भक्तानां मुक्तिहेतवे ।
ब्रह्मादिभिरगम्यं तत् कैलासभवनं त्विदम् ॥ १६
शिवलोको मध्यभागे महाकैलासमण्डले ।
वामभागे शक्तिलोको दिव्यवैभवसंयुतः ॥ १७
पूर्वभागे गणेशस्य लोकोऽतिसुखदायकः ।
पश्चिमे स्कन्दलोकस्तु रुद्रलोकस्तु दक्षिणे ॥ १८
लोकपञ्चकसंयुक्तं महाकैलासमण्डलम् ।
शिवलोके शिवस्याङ्गसंभवाः सद्यपूर्वकाः ॥ १९
अर्धनारीशपूर्वाश्च मूर्तयश्चापि सन्ति वै ।
देवीलोकेऽपि सन्त्येव क्रमाद्देव्यङ्गसंभवाः ॥ २०
स्वर्गं स्वानन्दभवनमिति प्रोक्तं श्रुतावपि ।
गणेशलोकस्त्वतुलः स्वर्गानन्दप्रदायकः ॥ २१
गणेश्वरः पुष्टिपतिर्मुख्यभूतो विराजते ।
तदङ्गसंभवाः श्रेष्ठाः कथिताः षड्विनायकाः ॥ २२
रुद्रलोके महारुद्रः प्रोक्तः कालाग्निरुद्रकः ।
ईशानस्थाणुपूर्वाश्च तदङ्गोद्भूतमूर्तयः ॥ २३
स्कन्दलोके षण्मुखस्तु मुख्यभूत इति स्मृतः ।
षष्ठीवल्लीयुतश्चायं ज्ञानमूर्तिर्विराजते ॥ २४
षण्मुखेभ्यश्च सञ्जाताः षट् कुमाराः प्रकीर्तिताः ।
वीरबाहुमुखाश्चान्ये किंकराः षण्मुखस्य च ॥ २५
कैलासभवनं चैतद्ब्रह्मादीनां लयेऽपि च ।
नाशहीनमिति प्रोक्तं परंज्योतिःस्वरूपकम् ॥ २६
देवैश्च मुनिभिः सिद्धैः प्रार्थितः परमेश्वरः ।
दृश्यमूर्तियुतः साक्षात् पञ्चवक्त्रविराजितः ॥ २७
कैलासपर्वते भूम्यां निवासं कुरुते गणैः ।
ब्रह्मणो दिवसो लोके कल्प इत्यभिधीयते ॥ २८
भूम्यन्तरिक्षस्वर्गाश्च लीयन्ते दिनकल्पके ।
ब्रह्मणः सप्त दिवसा वार इत्यभिधीयते ॥ २९

सत्यलोकान्तलोकाश्च नश्यन्तीशस्य शासनात् ।
कैलासाख्यगिरिश्चापि श्वेतद्वीपं हरेस्तदा ॥ ३०
मनोवती ब्रह्मणश्च नश्यन्ति शिवशासनात् ।
कैलासगिरिनाशे तु गणाः सर्वे शिवाज्ञया ॥ ३१
कैलासभवनं लोकं गच्छेयुर्दिव्यदेहिनः ।
प्रधानभूतः स्कन्दश्च षट् कुमारास्तदुद्भवाः ॥ ३२
अवतारं प्रकुर्वन्ति पथा भिन्नेन विष्टपे ।
वधाय शूरपद्मस्य सिंहवक्त्रस्य रक्षसः ॥ ३३
रक्षसस्तारकस्यापि त्रयाणां घोररूपिणाम् ।
प्रादुर्भूतो महासेनो मुख्यभूत इति स्मृतः ॥ ३४
भिल्लीपुत्रो वह्निपुत्रः कृत्तिकातनयस्तथा ।
गङ्गापुत्रो रुद्रपुत्रः शक्तिपुत्र इति स्फुटम् ॥ ३५
षट् कुमाराश्च कथिता अवतीर्णास्तु विष्टपे ।
भिल्लीपुत्रस्तारकारिः षड्वक्त्रः शिखिसंस्थितः ॥ ३६
वह्निपुत्रश्च षड्वक्त्रो देवसेनामनोरमः ।
महिषासुरवर्यस्य निहन्ता वेदसंस्तुतः ॥ ३७
कृत्तिकातनयो बालो नग्नोऽयं बाहुलेयकः ।
गङ्गासुतस्तु निगमः पद्मासुरविनाशकः ॥ ३८
भुजद्वयेन संयुक्तः कौपीनकटिसूत्रधृत् ।
कदाचिच्च चतुर्बाहुश्चतुर्मूर्तिश्चतुःस्थले ॥ ३९
रुद्रपुत्रः क्रौञ्चहर्ता चतुर्भुजविराजितः ।
देवसेनानायकः स्याच्छक्तिपुत्रः प्रतापवान् ॥ ४०
सुब्रह्मण्यश्चतुर्बाहुर्वल्लीषष्ठीसमन्वितः ।
सिंहासुरनिहन्तायं कुमारो भक्तकामदः ॥ ४१
ब्रह्मणो दिनकल्पेषु चैषां लीलाः प्रकीर्तिताः ।
कल्पोत्तमे तत्पुरुषे शूरादीनां विनाशकः ॥ ४२
मुख्यभूतः षडास्यस्तु प्रादुर्भूत इति स्मृतः ।
सुब्रह्मण्यः शक्तिपुत्रो ब्रह्माणं पद्मसंभवम् ॥ ४३
प्रणवार्थस्वरूपं तु विभुः पप्रच्छ लीलया ।
प्रणवस्य परं ब्रह्म मता नादस्य देवता ॥ ४४

वर्णत्रयाणां देवाः स्युर्ब्रह्मविष्णुमहेश्वराः ।
मुख्याकारस्य देवोऽहं मुख्यभूतस्त्रिषु स्मृतः ॥ ४५
उवाचैवं पद्मजस्तु रुष्टस्तेन शिवासुतः ।
कारागृहे प्राक्षिपत्तं देवैः संप्रार्थितः शिवः ॥ ४६
तत्रागत्य कुमारं तु प्रणवार्थं त्वमेव ह ।
ब्रूहीत्याह तदा स्कन्दश्चाहं वेदे त्रिवारकम् ॥ ४७
सुब्रह्मण्यों तथा सुब्रह्मण्योमेवं तथा पुनः ।
कथितस्तेन तारस्य देवोऽहमिति चाब्रवीत् ॥ ४८
सदाशिवो मनुर्वेदे प्रोक्तो न स्मर्यते त्वया ।
जनकं तव विस्मृत्य शंसस्यात्मानमद्य वै ॥ ४९
अतः सर्पो भव गुह शापान्मम जगत्तले ।
एवं शप्त्वा सुतं शम्भुर्मोचयित्वा विधिं ततः ॥ ५०
स्वस्थानमगमद्देवो देवैरपि सुसंस्तुतः ।
स्कन्दो दुःखयुतो भूत्वाभ्राम्यद्दण्डककानने ॥ ५१
श्रीदक्षिणकुटीद्वीपं प्राप्तवान् दैवयोगतः ।
संपूज्य परमेशानं तपश्चक्रे विधानतः ॥ ५२
वर्षमात्रेण सन्तुष्टो महेशो दर्शनं ददौ ।
शापान्तं प्रार्थयामास महासेनः सदाशिवम् ॥ ५३
उवाच तनयं प्रीत्या स्वयंभूतेश्वरः शिवः ।
पूर्वरूपधरस्त्वं तु भव पुत्र मदाज्ञया ॥ ५४
स्वांशेन सर्परूपाढ्यो भव मे शासनेन वै ।
रूपद्वययुतं त्वां वै भजेयुर्भक्तपुङ्गवाः ॥ ५५
एवमुक्त्वा कुमारं तं तिरोऽभूत् परमेश्वरः ।
रूपद्वययुतः स्कन्दस्तस्मिन् क्षेत्रे मुदान्वितः ॥ ५६
स्वांशेन सुस्थितो भूत्वा स्वस्थानमगमत्ततः ।
एवं स्कन्दः शम्भुसुतस्तस्मिन् क्षेत्रे महेश्वरम् ॥ ५७
पुपूज त्वं ब्रह्महत्यापीडितोऽसि हि भैरव ।
तत्र गत्वा महेशानं तपसा परितोषय ॥ ५८
महेशस्य प्रसादेन ब्रह्महत्या निवर्त्स्यति ।

एवं श्रुत्वा भैरवस्तद्दण्डकावनमाविशत् ॥ ५९

॥ इति श्रीदक्षिणकुटीद्वीपक्षेत्रमाहात्म्ये जैगीषव्यभैरवसंवादे स्कन्दशापविमोको नाम षट्त्रिंशोऽध्यायः ॥

---

## ॥ अथ सप्तत्रिंशोऽध्यायः [भैरवब्रह्महत्यापगमः] ॥

स्कन्दः—

द्वादशाब्दव्रतं कुर्वन् भैरवो दण्डकावने ।
क्षेत्रेषु पूजयन् शम्भुं जप्येशक्षेत्रमागमत् ॥ १
खण्डीश्वरे स्वयं स्थित्वा तपश्चक्रे शिवं स्मरन् ।
शिवस्य शासनादेव व्रतान्ते भैरवो हरः ॥ २
श्रीदक्षिणकुटीद्वीपं प्रययौ स मुदा हरः ।
ध्यायन् शिवं तपश्चक्रे मासमेकं निरन्तरम् ॥ ३
आविर्बभूव पुरतो भैरवस्य गणान्वितः ।
गौरीस्कन्दगणेशैश्च वृषभं वाहमास्थितः ॥ ४
अष्टम्यां कृष्णपक्षे वै कृत्तिकाभानुवासरे ।
नत्वा शम्भुं भैरवः संतुष्टाव परमेश्वरम् ॥ ५
उवाच भैरवं वीक्ष्य देवः पशुपतीश्वरः ।

शिव उवाच—

त्वं तु भैरव शम्भोर्मे मूर्तिरेव न संशयः ॥ ६
ब्रह्महत्या विनष्टा ते भस्मत्वं समुपागता ।
कपालं ब्रह्मणश्चैतत् स्थापय त्वं हिमालये ॥ ७
ब्रह्माण्डे विद्यमानानां क्षेत्राणामपि पालकः ।
तीर्थानां पालकश्चापि भविष्यसि ममाज्ञया ॥ ८
कापालिका इति प्रोक्तास्तव भक्ता जगत्तले
भैरवी तव शक्तिः स्याच्चामुण्डा चेति विश्रुता ॥ ९
अणिमाद्यष्टसिद्धीश्च लभेरंस्त्वत्प्रसादतः ।
शैवेषु क्षेत्रवर्येषु गाणपत्येषु विष्टपे ॥ १०
अधिकारी पालकश्च त्वमेव भव भैरव ।
स्वायंभुवेषु क्षेत्रेषु मृतानां पापिनामपि ॥ ११
भव त्वं शिक्षको नैव प्रवेश्या यमकिंकराः ।

स्वायम्भुवेषु क्षेत्रेषु मृता ये हर मानवाः ॥ १२
तेषां पापविशुद्धिं त्वं कृत्वा संशिक्षणेन ह ।
तान् संप्रापय कैलासं मुक्तिस्थानं जगत्तले ॥ १३
स्वायम्भुवानि क्षेत्राणि काशीपूर्वाणि विष्टपे ।
तवापि क्षेत्रकाण्येव भवन्तु मम शासनात् ॥ १४

स्कन्दः—

एवं तस्मै वरान् दत्त्वा परमेशस्तिरोऽभवत् ।
भैरवो बहु सन्तुष्टः संपूज्य परमेश्वरम् ॥ १५
हिमवत्पर्वते स्थाप्य कपालं स्वस्थलं ययौ ।

सनत्कुमारः—

भैरवो रुद्र एव स्यात् प्राहुरेवं तु शाम्भवाः ॥ १६
रुद्रमूर्तिप्रभेदांश्च कृपया वद षण्मुख ।

स्कन्दः—

कालाग्निरुद्रो भगवानीशानः स्थाणुरुद्रकः ॥ १७
शरभो वीरभद्रश्च कूश्माण्डो हाटकेश्वरः ।
कश्यपस्य सुतश्चापि स्मृताः स्यू रुद्रमूर्तयः ॥ १८
आदिसृष्ट्यां ब्रह्मणा च केशवेन सहोत्थितः ।
संहारकर्ता रुद्रस्तु प्रोक्तः कालाग्निरुद्रकः ॥ १९
स एव कल्पभेदेन ब्रह्मणा सह माधवात् ।
सञ्जातः शंकरोऽयं वै ईशान इति कथ्यते ॥ २०
तथा कल्पप्रभेदेन भ्रूमध्याद्ब्रह्मणोऽभवत् ।
स्थाणुरुद्रोऽथ वेदेषु नीललोहित उच्यते ॥ २१
कश्यपस्यैव तपसा तस्य पुत्रो बभूव ह ।
ईशानोऽयं दिक्पतिः स्यात् सुरेन्द्राद्यैः सह स्थितः ॥ २२
ब्रह्मणो गर्वनाशार्थं परमेशस्य शासनात् ।
भैरवः संबभूवायं क्षेत्राणां पतिरुच्यते ॥ २३
धरातले वासशीलः स्वर्णवर्णप्रधारणात् ।
हाटकेश इति प्रोक्तो धनरत्नप्रदायकः ॥ २४
कूश्माण्डयक्षसन्तुष्टः कपिलस्य महात्मनः ।
अनुग्रहाय मूर्त्याढ्यः प्रोक्तः कूश्माण्डरुद्रकः ॥ २५
दक्षयज्ञविनाशार्थं जातः स्याद्वीरभद्रकः ।
नृसिंहगर्वनाशार्थं सञ्जातः शरभः स्मृतः ॥ २६

एवमष्टप्रभेदेन रुद्रमूर्तिर्निरूप्यते ।
श्मशानभूमिः सर्वत्र रुद्रभूमिरिति स्मृता ॥ २७
काल्या च कालरुद्रस्तु निवासं कुरुते सदा ।
कालाग्निरुद्रो भगवान् वरः स्याद्रुद्रमूर्तिषु ॥ २८
तस्य मूर्तिषु सर्वासु भैरवी प्रवरा मता ।
भैरवाराधनं लोके रुद्राराधनमीरितम् ॥ २९
असिताङ्गादयश्चाष्ट भैरवा वेदविश्रुताः ।
अङ्गोद्भूता भैरवस्य क्षेत्रपालस्य वै मताः ॥ ३०
वटुकाद्या भैरवाश्च भैरवस्य महात्मनः ।
स्थितिभेदा मूर्तयः स्युरिति वेदविदो विदुः ॥ ३१
वटुकः क्षेत्रपालश्च तथा वै कालभैरवः ।
आकाशभैरवश्चापि स्वर्णाकर्षणभैरवः ॥ ३२
मार्तण्डभैरवश्चापि तथा वै नग्नभैरवः ।
कङ्कालभैरवश्चेति स्मृता वा अष्ट भैरवाः ॥ ३३
अष्टानां भैरवाणां च मन्त्राः शास्त्रेषु कीर्तिताः ।
शक्तिक्षेत्रेषु सर्वेषु वटुको भैरवः स्मृतः ॥ ३४
क्षेत्रेषु गाणपत्येषु कथितो नग्नभैरवः ।
मार्तण्डभैरवः प्रोक्तो भास्करक्षेत्रकेषु च ॥ ३५
भैरवस्य स्थले देवः कथितः क्षेत्रपालकः ।
क्षेत्रेष्वपि च शैवेषु स्मृता अन्ये हि भैरवाः ॥ ३६
श्वानरूपी तु वेदात्मा वाहनं भैरवस्य ह ।
श्रीदक्षिणकुटीद्वीपे कथितः कालभैरवः ॥ ३७
एवं तु भैरवस्यैतत् स्वरूपमपि कीर्तितम् ।
अस्य श्रवणमात्रेण न व्रजेद्यमयातनाम् ॥ ३८

। इति श्रीदक्षिणकुटीद्वीपक्षेत्रमाहात्म्ये भैरवब्रह्महत्यापगमो नाम सप्तत्रिंशोऽध्यायः ॥

॥ अथाष्टात्रिंशोऽध्यायः [सर्वदेवमयतीर्थमाहात्म्यकथनम्]

स्कन्दः—

सह्याद्रिपर्वते क्षेत्रे प्रार्थितः कुम्भजेन च ।

उमया सहितश्चक्रे सान्निध्यं परमेश्वरः ॥ १
शिवतुष्ट्यै स्वयं ब्रह्मा रुद्रपाशुपतं मखम् ।
कर्तुमिच्छासनाथस्तु परमेशं न्यवेदयत् ॥ २
आकारयामास तदा परमर्षीन् सदाशिवः ।
जमदग्निं वसिष्ठं च मार्कण्डेयं च नारदम् ॥ ३
कपिलं पुलहं कण्वं विश्वामित्रं द्वितं त्रितम् ।
आययुस्ते शिवाहूता अन्ये सर्वे दिदृक्षवः ॥ ४
प्रारेभिरे मखं सर्वे सुमुहूर्ते तथोषसि ।
सावित्रीं गृहकार्येषु सक्तां त्यक्त्वा मुनीश्वराः ॥ ५
पुण्याहं वाचयामासुर्गायत्रीमुपवेश्य ते ।
कारयित्वाभ्युदयिकं मातृपूजनपूर्वकम् ॥ ६
अस्थापयन्नग्निकुण्डे यावद्वैश्वानरं क्रमात् ।
सावित्री तावदायातारम्भं दृष्ट्वा रुषान्विता ॥ ७
उवाच क्रोधरक्ताक्षी वीक्ष्य सर्वान् सभासदः ।

सावित्र्युवाच—

मामनादृत्य यागोऽयं समारब्धो न सेत्स्यति ॥

स्कन्दः—

मुञ्चती मुखतो ज्वालां दग्धुकामा चराचरम् ।
शशाप सा देवमुनीन् जडा यूयं भविष्यथ ॥ ९
नियुज्यानधिकारां तां गायत्रीं सर्व एव हि ।
इमं मखं समारब्धास्त्यक्त्वा मां ज्यायसीं यतः ॥ १०
ततो देवाः प्रणम्योच्चैः प्रार्थयामासुरुत्सुकाः ।
सावित्रीं सर्वजननीं डलयोरैक्यतः शुभे ॥ ११
जलरूपा भविष्यामः सरोनदनदीह्रदाः ।
तथेत्युक्ते तया देव्या नदीरूपत्वमागताः ॥ १२
ब्रह्मा चिन्तां परां प्राप मखविघ्न उपस्थिते ।
मन्निमित्तं सुराः सर्वे धुनीरूपमुपागताः ॥ १३
कथं संकल्पबाधश्च जातो मेऽद्य दुरत्ययः ।
इत्येवं चिन्तयामास ब्रह्मा तावत्सुराङ्गनाः ॥ १४
देवान् वै तादृशान् ज्ञात्वा समीयुर्ब्रह्मणोऽन्तिकम् ।
पुलोमजा च स्वाहा च संज्ञा च कमलापि च ॥ १५
अन्या अपि समूचुस्तं सर्वास्ताः कमलासनम् ।

किमस्माभिरनुष्ठेयं देवैश्च जलरूपिभिः ॥ १६
कं याम शरणं देव त्वदृते कमलोद्भव ।
इति तासां वचः श्रुत्वा मा भयं कुरुतेति सः ॥ १७
उवाच तास्तथा वक्ष्ये यथा सर्वं भवेच्छुभम् ।
किमसाध्यं हि भक्तानां सुप्रसन्ने सदाशिवे ॥ १८
सर्वाः कुरुध्वं तद्भक्तिं स वः सर्वं प्रियं चरेत् ।
प्रसादयिष्येऽहमपि जगदीशं सदाशिवम् ॥ १९
इत्युक्तास्ता गता दूरं दण्डके चोलराष्ट्रके ।
श्रीदक्षिणकुटीद्वीपं दैवयोगाद्ययुस्ततः ॥ २०
तेपुस्तत्र तपो घोरं सर्वास्ताः सुरयोषितः ।
काचिन्नामजपं चक्रे काचिन्मन्त्रजपं तथा ॥ २१
काचित् पद्मासने तस्थौ ध्यायन्ती परमेश्वरम् ।
काचित् वीरासनगता निराहारा तथापरा ॥ २२
संमार्जयन्ती द्वाराणि चत्वराणि गृहाणि च ।
प्रदक्षिणनमस्कारैः कुर्वती भक्तिमुत्तमाम् ॥ २३
काचिदेकाङ्गुष्ठगता तस्थौ ध्यात्वा सदाशिवम् ।
काचिन्निमील्य नयने स्तोत्राण्येवापठत्तदा ॥ २४
बहुकाले व्यतिक्रान्ते न तुतोष सदाशिवः ।
तदा चिन्तां परां जग्मुः किं कुर्म इति विह्वलाः ॥ २५
नभोवाणीं ततः श्रुत्वा बिल्वपत्रं विना विभुः ।
न सन्तुष्येदिति तदा सर्वा एव सुरस्त्रियः ॥ २६
बिल्वपत्रैश्च शम्याककुसुमैर्भावपूर्वकम् ।
पुपूजुः परया भक्त्या देवदेवं सदाशिवम् ॥ २७
ततः परमकारुण्याद्बिल्वपत्रैः सुतोषितः ।
आविरासीत् पुरस्तासां स्वयंभूतेश्वरः शिवः ॥ २८
दशबाहुः पञ्चवक्त्रः प्रतिवक्त्रं त्रिलोचनः ।
गङ्गाधरश्चन्द्रचूडः श्रीकण्ठः स्मितवक्त्रकः ॥ २९
वृषारूढो गणेशानस्कन्दशक्तिसमन्वितः ।
सर्वास्ता ददृशुर्देवं कोटिसूर्यसमप्रभम् ॥ ३०
निमील्य नयने नेमुर्दण्डवत् पृथिवीतले ।

तुष्टुवुस्ताः करपुटं कृत्वा देवं महेश्वरम् ॥ ३१
अतिप्रसन्नवदनाः परमानन्दनिर्भराः ।

ता ऊचुः—

नमस्ते सर्वरूपाय सर्वान्तर्यामिणे नमः ॥ ३२
नमः सर्वकृते तुभ्यं सर्वदात्रे कृपालवे ।
नमः कष्टविनाशित्रे नमस्तेऽनन्तशक्तये ॥ ३३
नमः सर्वप्रबोधाय सर्वपात्रेऽखिलादये ।
परब्रह्मस्वरूपाय निर्गुणाय नमो नमः ॥ ३४
चिदानन्दस्वरूपाय वेदागोचरशक्तये ।
मायाश्रयायामेयाय गुणातीताय ते नमः ॥ ३५
सत्यायासत्यरूपाय गुणविक्षोभकारिणे ।
शरणागतपालाय दैत्यदानवभेदिने ॥ ३६
अनेकवरदात्रे ते भक्तानां हितकारिणे ।
स्वयंभूतेशाय नमो वसिष्ठेशाय ते नमः ॥ ३७
नमः पशुपतीशाय नागेशाय नमो नमः ।
नमो रथपुरीशाय नमो धेनुपुरीश्वर ॥ ३८

स्कन्दः—

एवं स्तुत्वा पुनर्नत्वा याचन्ते स्म वरान् बहून् ।
देवानां जलरूपाणां स्वरूपाणि प्रयच्छ भोः ॥ ३९
नास्मृतिः सर्वदा ते स्यात्तथा कर्तुमिहार्हसि ।

स्वयंभूतेश उवाच—

ददामि वाञ्छितं वोऽहमनुष्ठानवशीकृतः ॥ ४०
स्तुत्या नत्या च सन्तुष्टस्तथास्तु वचनं तु वः ।
सावित्र्या वचनाज्जाता जलभूताः सुराः शुभाः ॥ ४१
तद्वाक्यमन्यथाकर्तुं न हि शक्तः पितामहः ।
निजं स्वरूपं यास्यन्ति स्थित्वांशेन तथाविधाः ॥ ४२
स्वाधिकारान् प्रपत्स्यन्ते नान्यथा भाषितं मम ।
बिल्वपत्रैः पूजयध्वं यूयं देवाः सदेह माम् ॥ ४३
येनार्पितं बिल्वपत्रं भुवनं तेन चार्पितम् ।
सुवर्णशतभाराणां फलं प्राप्तं न संशयः ॥ ४४

स्कन्दः—

एवं ब्रुवति गौरीशे स्वस्वरूपधराः सुराः ।
स्थिताश्चांशान्नदीरूपा ददृशुस्ते सदाशिवम् ॥ ४५
तेऽपि संप्रार्थयामासुर्नत्वा स्तुत्वा शिवापतिम् ।
क्षमस्व नोऽपराधं यद्बुद्धिमोहसमाश्रयात् ॥ ४६
त्यक्त्वा ज्येष्ठां च सावित्रीं प्रारभामहि तं मखम् ।
दृष्टं तु तत्फलं सद्यः प्रसादात्ते पुनर्नवाः ॥ ४७
जाताः स्म परमानन्दं प्राप्ताः स्म कृपया तव ।
एवमुक्त्वा पुपूजुस्ते बिल्वपत्रैः सदाशिवम् ॥ ४८
सोऽपि तान् प्रतिनन्द्याथ स्वयंभूतेश्वरोऽवदत् ।

शिवः—

नद्यादितीर्थरूपाश्च यूयं स्वांशेन भूतले ॥ ४९
लोकानामुपकारार्थं शासनान्मम तिष्ठत ।
अस्मिन् क्षेत्रे तु सर्वेऽपि शूलतीर्थं महत्तरम् ॥ ५०
चक्रतीर्थं तथा कूपतटाकादि समाश्रिताः ।
पावनाय जनानां वै तीर्थरूपाश्च तिष्ठत ॥ ५१
अस्मिन् क्षेत्रे सरःकूपतटाकाद्या जलाशयाः ।
सर्वतीर्थमयाः सन्तु यूयं वसत तेषु ह ॥ ५२
एवमुक्त्वा महादेवो लिङ्गमध्ये तिरोऽभवत् ।
सर्वतीर्थमयं तीर्थं पशुतीर्थं रुजापहम् ॥ ५३
चक्रतीर्थं तथा प्रोक्तं तथान्यानि मुनीश्वर ।
ततो ब्रह्मा देवगणैः पुनरारभ्य तं क्रतुम् ॥ ५४
शिवस्य सन्निधौ कृत्वा समाप्य विधिपूर्वकम् ।
पशुतीर्थे ह्यवभृथं चकार स सुरर्षिभिः ॥ ५५
श्रीदक्षिणकुटीद्वीपक्षेत्रगाणां यथाक्रमम् ।
माहात्म्यं कथितं तुभ्यं ब्रह्मपुत्र महामते ॥ ५६

॥ इति श्रीदक्षिणकुटीद्वीपक्षेत्रमाहात्म्ये सर्वदेवमयतीर्थमाहात्म्यकथनं नामाष्टात्रिंशोऽध्यायः ॥

## ॥ अथैकोनचत्वारिंशोऽध्यायः [स्थलवृक्षस्वरूपाभिधानम्] ॥

सनत्कुमारः—

एतत्स्थलस्थवृक्षाणां स्वरूपमपि मे वद ।

स्कन्द उवाच—

पुरा तत्पुरुषे कल्पे मायायास्तनया वराः ॥ १
शूरपद्मः सिंहवक्त्रस्तारकश्च महाबलः ।
शुक्रस्य शासनादेते शिवं ध्यात्वा हृदम्बुजे ॥ २
पञ्चाक्षरं जपन्तश्च तपश्चक्रुः सुदुष्करम् ।
ततो वर्षसहस्रान्ते प्रददौ दर्शनं शिवः ॥ ३
अष्टोत्तरसहस्राणामण्डानामाधिपत्यकम् ।
गुणदेवैरजेयत्वं सर्वदा समरे जयम् ॥ ४
नानारथानि चायुष्यं युगमष्टोत्तरं शतम् ।
सर्वाण्डगान्यसंख्यानि शस्त्राणि विविधानि च ॥ ५
अस्त्राण्यपि च देहीति प्रार्थयामासुरेव ते ।
अभयं सर्वदेवेभ्यो विना मे तनयं गुहम् ॥ ६
अन्यान्यपि च सर्वाणि दत्तानीति शिवोऽवदत् ।
अनुगृह्य च तान् सर्वान् परमेशस्तिरोऽभवत् ॥ ७
वीरमाहेन्द्रके द्वीपे दक्षिणाम्भोधिमध्यगे ।
स्थित्वा स शूरपद्मस्तु भ्रातृभ्यां सहितो वशी ॥ ८
दैत्यानामधिपो भूत्वा सुरान् प्रत्यण्डवासिनः ।
दिगीशपूर्वगान् देवान् जित्वा युद्धे बलान्वितः ॥ ९
चकार करदान् सर्वान् स्वस्याज्ञापरिपालकान् ।
दानवैरपि सर्वैश्च शिवभक्तिं चकार ह ॥ १०
स्वधास्वाहावषट्कारा नाशिता दानवैः क्षितौ ।
एतदण्डगता देवाः पदभ्रंशमवाप्नुवन् ॥ ११
पर्वतानां गुहास्वेव न्यवसन् क्षुत्तृषार्दिताः ।
यज्ञभागविहीनत्वात् सञ्जाता दुर्बलाश्च ते ॥ १२
दैत्यानां मरणं स्कन्दादिति ज्ञात्वा सुरर्षयः ।
स्कन्दस्योत्पादने यत्नं चक्रुर्वै गूढमार्गतः ॥ १३
ताडितो मन्मथेनैव शंकरो लोकशंकरः ।

हस्ते गृहीत्वा गौरीं तां रत्यर्थं वै विवेश सः ॥ १४
अन्तःपुरं भोगपुरे दिव्यरूपं तया सह ।
षष्टिवर्षसहस्राणि तया रेमे सदाशिवः ॥ १५
दीर्घक्रीडां महेशस्य दृष्ट्वा तद्बोधनेच्छया ।
क्रीडाविघ्नं प्रकर्तुं च वह्नेराज्ञां ददौ विधिः ॥ १६
वह्निर्ब्राह्मणरूपेण गत्वा भीतिसमन्वितः ।
प्रासादद्वारके स्थित्वा प्लुतध्वनिमुपाश्रितः ॥ १७
त्रिवारमार्ये भवति भिक्षां देहीत्ययाचत ।
भिक्षुकस्य ध्वनिं श्रुत्वा शयनादुत्थिता शिवा ॥ १८
दधार वस्त्रमतुलं शिववीर्यं पपात ह ।
हस्ते वीर्यं तु जग्राह भिक्षुकाय ददौ च तत् ॥ १९
देवानां चेष्टितं ज्ञात्वा ज्ञानदृष्ट्या ततः शिवा ।
शशाप सर्वान् देवांश्च देवीर्वै कोपसंयुता ॥ २०
वीर्यपातस्य मे गर्भे विघ्नं चक्रुः सुरादयः ।
वृक्षरूपा भवन्त्वेते देवाः सर्वे ममाज्ञया ॥ २१
लतावृक्षकरूपाश्च जायन्तां देवयोषितः ।
एवं शशाप तान् सर्वान् शंकरं प्रययौ ततः ॥ २२
शिवस्य रेतो बुभुजे वह्निः शापभयेन च ।
तत्याज वीर्यं गङ्गायां ततो जातः षडाननः ॥ २३
देवसेनापतिर्भूत्वा तारकं सिंहवक्त्रकम् ।
जघान लीलया शूरपद्मं च समरे गुहः ॥ २४
पीडिताः पार्वतीशापाद्ब्रह्मविष्णुहरादयः ।
लक्ष्मीपूर्वा देवनार्यो ब्रह्मवाक्यप्रचोदिताः ॥ २५
श्रीदक्षिणकुटीद्वीपं जग्मुर्वै ब्रह्मणा सह ।
तीर्थद्वये च ते स्नात्वा विधिपूर्वं सुरेश्वराः ॥ २६
स्वयंभूतं महालिङ्गं पुपूजुश्च यथामति ।
जपन्तश्च महामन्त्रांस्तपश्चक्रुः सुदुष्करम् ॥ २७
एवं गतेषु वर्षाणां सहस्रेषु सदाशिवः ।
आविरासील्लिङ्गमध्याद्वृषारूढोऽम्बिकायुतः ॥ २८
देवास्तदा देवनार्यो नत्वा स्तुत्वा महेश्वरम् ।

बद्धाञ्जलिपुटा भूत्वा प्रार्थयामासुरादरात् ॥ २९
शापाद्विमोचनं देव्याः कुरु देव नमोऽस्तु ते ।
उवाच तान् महादेवो यूयं शापाद्विमोचिताः ॥ ३०
स्वस्वरूपधराः सर्वे स्वपदान्यधितिष्ठत ।
स्वांशेन वृक्षरूपाश्च भविष्यथ ममाज्ञया ॥ ३१
भूम्यां नानास्थलेष्वेवं वृक्षरूपसमन्विताः ।
तिष्ठतास्मिन् स्थलवरे सर्वेऽपि द्रुमरूपिणः ॥ ३२
एवं शम्भोर्वचः श्रुत्वा तथा तस्थुः सुरोत्तमाः ।
अनुगृह्य सुरांश्चैवं परमेशस्तिरोदधे ॥ ३३
संहाररुद्रो भगवान् वटरूपी बभूव ह ।
अश्वत्थरूपी सञ्जातो भगवान् कमलापतिः ॥ ३४
पलाशरूपी ब्रह्माभूद्रुद्राणी तु शमी त्वभूत् ।
बिल्वरूपा रमा जाता नीला वै तुलसी त्वभूत् ॥ ३५
प्रियङ्गुवृक्षरूपाभूद्धरणी तु हरिप्रिया ।
सावित्री चम्पकाभूद्वै कदम्बद्रुमरूपिणी ॥ ३६
श्यामला सम्बभूवैवं शम्याकोऽभूद्धरः स्वयम् ।
एवं सर्वे सुराश्चापि बभूवुर्वृक्षरूपिणः ॥ ३७
वृक्षवर्गगताः प्रोक्ता गुल्माश्चापि लतास्तथा ।
एकविंशतिलक्षाख्यभेदयुक्ताश्च ते स्मृताः ॥ ३८
देवदेव्यंशसंजाताः सर्वे ते नात्र संशयः ।
ब्रह्मा लक्ष्मीश्च रुद्रश्च वृक्षरूपसमन्विताः ॥ ३९
इन्द्राणी च लता भूत्वा सेवतेऽस्मिन् स्थले शिवम् ।
पलाशवृक्षो भूत्वा तु सेवते शंकरं विधिः ॥ ४०
बिल्ववृक्षस्वरूपा मा सेवते परमेश्वरम् ।
संहाररुद्रो भगवान् भूत्वा शम्याकपादपः ॥ ४१
सेवते कुसुमैर्नित्यं शङ्करस्य परात्मनः ।
इन्द्राणी मालती भूत्वा कुसुमैः सेवते शिवम् ॥ ४२
तस्मादेव स्थलं चैतत् पलाशवनमुच्यते ।
वसिष्ठस्य तपःकाले पलाशविपिनं स्मृतम् ॥ ४३
मङ्गला वैश्यतनया मालतीकुसुमैः शिवाम् ।

आनर्चे तेन चैतत्तु मालतीवनमीरितम् ॥ ४४
जमदग्निश्च शेषाद्याः पुपूजुर्बिल्वपत्रकैः ।
तेन बिल्ववनं प्रोक्तं क्षेत्रमेतन्मुनीश्वर ॥ ४५
शम्याककुसुमेनैव भैरवाद्याश्च केचन ।
पुपूजुः परमेशानं स्वयंभूतं सदाशिवम् ॥ ४६
शम्याकवनमित्येव तेनैव कथितं त्विदम् ।
सर्ववृक्षसमायुक्तं क्षेत्रमेतन्मुनीश्वर ॥ ४७
चतुर्विधप्रभेदेन वननामयुतं त्वभूत् ।
पलाशविपिनं चेति कृते नामसमन्वितम् ॥ ४८
शम्याकविपिनं चेति त्रेतायां कथ्यते बुधैः ।
बिल्वारण्यं द्वापरे तु मालतीविपिनं कलौ ॥ ४९
माहात्म्यं स्थलवृक्षाणामेवं ते परिकीर्तितम् ।

॥ इति श्रीदक्षिणकुटीद्वीपक्षेत्रमाहात्म्ये स्थलवृक्षस्वरूपाभिधानं नामैकोनचत्वारिंशोऽध्यायः ॥

## ॥ अथ चत्वारिंशोऽध्यायः [आदिशैवादिपञ्चविधशैवलक्षणवर्णनम्] ॥

सनत्कुमारः—

ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा ब्रह्माङ्गसंभवाः ।
भिन्नधर्मा भिन्नवृत्तिसंयुता इति कीर्तिताः ॥ १
आदिशैवादयश्चान्ये मानवाः शैवसंज्ञकाः ।
कथं जाताः किमर्थं च तन्मे ब्रूहि दयानिधे ॥ २

स्कन्द उवाच—

देवाश्च मुनयश्चापि स्वस्वाभीष्टसुसिद्धये ।
भूम्यां लिङ्गप्रतिष्ठां ते चक्रुश्च विधिपूर्वकम् ॥ ३
स्वकार्यसिद्धिं संप्राप्य ययुस्ते स्वस्थलं ततः ।
तेषां वै नित्यपूजार्थमुत्सवार्थं च योगिनः ॥ ४
शङ्करं प्रार्थयामासुः कैलासे भावपूर्वकम् ।
तदा पञ्चमुखेभ्यश्च सिद्धान् पञ्च ससर्ज सः ॥ ५

कश्यपो भार्गवश्चैव भरद्वाजोऽथ कौशिकः ।
गौतमश्चेति ते प्रोक्ता मुनयो वीतकल्मषाः ॥
एते पञ्च मुनीशानाः शिववक्त्रसमुद्भवाः ।
बाहूरूपादकण्ठेभ्यस्तथा जाताश्च मानवाः ॥ ७
कण्ठजाता महाशैवा उपशैवाश्च बाहुजाः ।
अनुशैवा ऊरुजाः स्युः पारशैवाश्च पादजाः ॥ ८
पञ्चवक्त्रसमुद्भूता आदिशैवा इति स्मृताः ।
शिवाज्ञया नन्दिकेशः शैलादिर्गणपुङ्गवः ॥ ९
आदिशैवमुनीन्द्राणां स्वयं दीक्षाश्चकार ह ।
पञ्चगोत्रसमुद्भूता आदिशैवा द्विजोत्तमाः ॥ १०
आदिशैवाश्च लोकेषु गुरवश्चेति कीर्तिताः ।
महाशैवादिशैवानां दीक्षां तन्त्रानुसारतः ॥ ११
आदिशैवाः प्रकुर्वन्ति नन्दिकेशस्य शासनात् ।
महाशैवादिशैवा हि तन्त्रमार्गानुसारतः ॥ १२
दीक्षां ग्रहीतुं नो दातुमधिकारिण ईरिताः ।
दीक्षादाने त्वादिशैवाः स्मृता एवाधिकारिणः ॥ १३
कामिकादीनि तन्त्राणि शङ्करस्य परात्मनः ।
ईशानमुखजातानि वेदाश्चान्यमुखोद्भवाः ॥ १४
तन्त्राणि प्रददात्रादिशैवानां नन्दिकेश्वरः ।
वेदमन्त्रास्तत्र तत्र तन्त्रेष्वपि हि कीर्तिताः ॥ १५
वेदेषु चापि तन्त्राणि क्रियासु कथितानि च ।
अन्योन्यसाधकान्येवं वेदास्तन्त्राणि भूतले ॥ १६
आदिशैवा महाशैवा ब्राह्मणा इति विश्रुताः ।
अन्येषामपि शैवानां नापेक्ष्या वेदमन्त्रकाः ॥ १७
गर्भाधानादिसंस्कारान् वेदतन्त्रानुसारतः ।
आदिशैवा महाशैवा गृह्णन्ति च यथाक्रमम् ॥ १८
अन्येषामपि शैवानां तन्त्रशास्त्रानुसारतः ।
आदिशैवाः कारयन्ति नान्ये वा अधिकारिणः ॥ १९
धारणं तूपवीतस्य सर्वेषामपि कीर्तितम् ।
क्रियाकालेषु वा धार्यमनुशैवादिभिः क्रमात् ॥ २०

निषेकादिश्मशानान्तकर्म तन्त्रानुसारतः ।
इतरेषां विधातुं हि महाशैवादयोऽपि च ॥ २१
नाधिकारयुताः प्रोक्ता इत्याज्ञा पारमेश्वरी ।
अलाभे ह्यादिशैवानां महाशैवाश्च तत्र हि ॥ २२
अधिकारिण उच्यन्ते नान्यथा शिवशासनम् ।
पारशैवास्तु पदजाः संकराज्जातदेहिनाम् ॥ २३
श्मशानादिक्रियास्वेव ह्यधिकारयुताः स्मृताः ।
स्वजातिषु तथा कर्तुं नाधिकारयुता मताः ॥ २४
यथा शिवेन संसृष्टाः पुमांसः शङ्करेण वै ।
स्त्रियश्चापि तथा सृष्टाः पराशक्त्या तथैव हि ॥ २५
ते स्वजात्यनुसारेण जगृहुर्वनिताः क्रमात् ।
पञ्चगोत्रसमुद्भूता आदिशैवाः शिवाज्ञया ॥ २६
शिवक्षेत्राणि गत्वा च पुपूजुः परमेश्वरम् ।
उत्सवादीनि चक्रुश्च तन्त्रमार्गानुसारतः ॥ २७
दत्त्वालयार्थं पृथिवीं शिवधर्ममपालयन् ।
क्षत्रियाः शैवमार्गस्था वैश्या धान्यानि भूतलात् ॥ २८
पण्यानि शिवपूजार्थं प्रददुः प्रीतिपूर्वकम् ।
महाशैवाश्च पूजार्थं निवेदनमुखानि च ॥ २९
पूजासाधनपूर्वाणि कुर्युर्नानाविधानि च ।
पारशैवा वृक्षलतापूर्णोद्यानवनानि च ॥ ३०
संस्थाप्य देवपूजार्थं पत्रपुष्पमुखानि वै ।
ददुश्चालयशुद्धिं ते कुर्युर्दीक्षासमन्विताः ॥ ३१
गन्धर्वगानकुशला गानवाद्यैर्महेश्वरम् ।
पूजाकाले तोषयेयू रुद्रकन्याश्च नर्तनैः ॥ ३२
एवमालयपूजार्थं सृष्टाः शैवाः शिवेन तु ।
आदिशैवकुले जाता दीक्षाविरहिता नराः ॥ ३३
अनर्हाः शिवकार्येषु चेत्याह परमेश्वरः ।

सनत्कुमारः—

ब्राह्मणा वैदिका लोके सप्तर्षीणां कुलोद्भवाः ॥ ३४
आलये पूजनं कर्तुमर्हा वा न च वा वद ।

स्कन्दः—

परार्थपूजनं कर्तुमनर्हास्ते न संशयः ॥ ३५
स्वात्मार्थं पूजनं कर्तुमर्हास्ते नात्र संशयः ।
वैदिकैः पूजितं चेत्तत् संप्रोक्षणसुकर्मणा ॥ ३६
शुद्धिं कृत्वा पूजयेयुरादिशैवा द्विजोत्तमाः ।

सनत्कुमारः—

तुल्यप्रमाणभूतानि तन्त्राणि श्रुतयस्तथा ॥ ३७
तन्त्रेष्वपि हि वेदेषु मोक्षमार्गो निरूप्यते ।
उपासनं महेशस्य वेदेष्वपि निरूपितम् ॥ ३८
किमर्थं तन्त्रशास्त्रं तु पृथक् प्रोक्तं च शम्भुना ।

स्कन्दः—

ब्रह्मक्षत्रियवैश्यानां वेदाध्ययनयोग्यता ॥ ३९
इतिहासपुराणादि शूद्राणामपि कीर्तितम् ।
वैदिकोपासनं प्रोक्तं संग्रहेण श्रुतिष्वपि ॥ ४०
उपासनं तत् तन्त्रेषु प्रोक्तं विस्तारमार्गतः ।
विस्तारमार्गः क्षिप्रं वै देवतुष्टिविधायकः ॥ ४१
कामिकादीनि तन्त्राणि शुद्धानि प्रवराणि च ।
वामपाषण्डतन्त्राणि कानिचिच्चापि सन्ति हि ॥ ४२
संकरोत्पन्नमर्त्यानां तानि प्रोक्तानि केवलम् ।
वाममार्गो यथा तन्त्रे तथा वेदेषु केचन ॥ ४३
यज्ञा हिंसासमायुक्ताः प्रोक्ता मन्दाधिकारिणाम् ।
तान्त्रिकेषु यथा श्रेष्ठाः शुद्धतन्त्रपरायणाः ॥ ४४
उपासनापराः श्रेष्ठा वैदिकेषु तथा स्मृताः ।
मूलमन्त्रास्तथा नाममन्त्रा वेदेषु कीर्तिताः ॥ ४५
तन्त्रेष्वेवं वेदमन्त्राः कथिता देवबोधकाः ।
रुद्रसूक्तादिसूक्तानि मन्त्राः कर्मोपयोगिनः ॥ ४६
तन्त्रेषु कथिता एव ग्राह्यास्ते तन्त्रमार्गिभिः ।
यज्ञे तु केवलं योज्यमन्त्राश्च ब्राह्मणानि च ॥ ४७
ग्राह्याणि मुनिशार्दूल वेदेषु न हि तान्त्रिकैः ।
वेदानुसारि तन्त्रं वै ग्राह्यं स्याद्वैदिकैर्जनैः ॥ ४८

शिवार्चनोत्सवाद्येषु तन्त्रं ते मानयन्ति वै ।
शुद्धतन्त्रपराः शैवा आदिशैवपुरोगमाः ॥ ४९
देहो देवालयः प्रोक्त आत्मा शम्भुरुदीरितः ।
विमाने मूललिङ्गे च बलिपीठेऽपि शङ्करः ॥ ५०
निवासं कुरुते भक्तहितायानुग्रहाय च ।
गन्तुं गर्भगृहं तत्र स्थित्वा देवप्रपूजने ॥ ५१
अधिकारयुताः प्रोक्ता आदिशैवास्तु केवलम् ।
तत्र गत्वा प्रदीपानां स्थापनाद्येषु केवलम् ॥ ५२
अधिकारयुतास्ते वै महाशैवाः शिवालये ।
वैदिका वेदमन्त्राणां वक्तारः शिवसन्निधौ ॥ ५३
अर्धमण्टपपर्यन्तं गन्तुं वा अधिकारिणः ।
क्षत्रियाश्चापि वैश्याश्च पारशैवास्तथैव च ॥ ५४
महामण्डपपर्यन्तं गन्तुं वा अधिकारिणः ।
शिवदीक्षाविरहिताः शूद्रास्तत्र बहिःस्थले ॥ ५५
स्थित्वा देवस्य सेवां वै कर्तुमेवाधिकारिणः ।
रजका नापिता अन्ये ध्वजस्तम्भान्तमेव च ॥ ५६
अधिकारयुता गन्तुं स्थित्वा तत्रैव सेवने ।
यत्र यत्र च ये गन्तुमधिकारसमन्विताः ॥ ५७
तैस्तैस्तद्देशपर्यन्तं गन्तव्यं स्याच्छिवालये ।
अतिक्रम्य गतं चेत्तु कार्यं संप्रोक्षणं तदा ॥ ५८
विमानदर्शने चापि बलिपीठस्य दर्शने ।
वीथीप्रदक्षिणे चैव चण्डालाद्याश्च संकराः ॥ ५९
अधिकारयुताः प्रोक्ताः शिवविग्रहदर्शने ।
यदि गच्छेद्वैदिकस्तु मूलस्थानं शिवस्य ह ॥ ६०
संप्रोक्षणं तदा कार्यं लिङ्गशुद्ध्यै सुपूजकैः ।
यदि गच्छेत् क्षत्रियस्तु वैश्यो वा चार्धमण्टपम् ॥ ६१
तदैव कार्यं विधिना संप्रोक्षणसुकर्म वै ।
शिवदीक्षाविरहितः शूद्रो वा संकरोऽथवा ॥ ६२
महामण्टपभूभागं गतश्चेत्तु तदैव च ।
संप्रोक्षणं प्रकर्तव्यं विधिना शुद्धिहेतवे ॥ ६३

चण्डालस्य प्रवेशेन मोहादेवशिवालये ।
महाभिषेकः कार्यः स्यात् संप्रोक्षणपुरःसरम् ॥ ६४
शिवालये पूजनादिविषये सेवनेऽपि च ।
कामिकादिष्वागमेषु क्रमाः प्रोक्ताः शिवेन वै ॥ ६५
शिवधर्मसुसिद्ध्यर्थं तन्त्रशास्त्रं तु निर्मितम् ।
आदिशैवादयश्चापि सृष्टा लोकहिताय च ॥ ६६

सनत्कुमारः—

आदिशैवादिशैवानां लक्षणं ब्रूहि षण्मुख ।

स्कन्दः—

भस्मोद्धूलितविग्रहा द्विजवराः श्वेताम्बरालङ्कृता
रुद्राक्षाभरणास्त्रिपुण्ड्लसिता दीक्षात्रयेणान्विताः ।
जिह्वाग्रे शिवनामकीर्तनयुताः शैवागमे पारगाः
शैवाश्चादिमपूर्वकाश्च गुरवः शैवालये पूजकाः ॥ ६७
दीक्षां वै त्रिविधां गुरोश्च निकटात् प्राप्ताश्च ये वै द्विजाः
शैवाद्यागमतत्पराः परशिवे भक्त्यान्विता भस्मना ।
तिर्यक्पुण्ड्रयुता हराक्षमणिभिः संभूषिताश्चालये
पूजायां परिचारका जपयुताः शैवा महत्संयुताः ॥ ६८
राष्ट्रस्यैव सुपालका नृपवरा दीक्षात्रयेणान्विताः
रुद्राक्षाभरणास्त्रिपुण्ड्रलसिताः शैवालये यत्नतः ।
धर्माणां परिपालकास्तु धरणीं दत्त्वा परेशाय वै
शैवाश्चोपपदान्विताश्च गुणिनः शैवागमे तत्पराः ॥ ६९
दीक्षाभिश्च समन्विताः पशुपतेर्भूम्यां कृषिं यत्नतः
कृत्वा धान्यसुपण्यकानि च विभोर्यच्छन्ति ये भक्तितः ।
रुद्राक्षाभरणास्त्रिपुण्ड्रलसितास्ते चानुनामान्विताः
शैवा धेनुसुरक्षकाः शिवविभोः क्षीरादिसन्दायकाः ॥ ७०
दीक्षां प्राप्य गुरोः शिवालयवरे चोद्यानसंरक्षकाः
सर्वत्रापि च शोधकाः शिवविभोर्दीपावलेर्दायकाः ।
तिर्यक्पुण्ड्रहराक्षमालिकधराः शैवागमे तत्पराः
शम्भौ भक्तिसमन्विताश्च पदजास्ते पारशैवाः स्मृताः ॥ ७१
नानावाद्यपराः शिवालयवरे वस्त्रादिसंशोधका
वस्त्राणामपि कारकाः शिवविभोर्भाण्डादिसन्दायकाः ।

नानाशिल्पपरास्त्रिपुण्ड्रलसिता दीक्षान्विता मानवाः
शैवाश्चान्तरसंज्ञकाश्च कथिताः श्रीरुद्रकन्यास्तथा ॥ ७२
एवं प्रसङ्गाद्योगीन्द्र शैवलक्षणमीरितम् ।

सनत्कुमारः—

वेदतन्त्रानुसारेण सिद्धान्तं वद षण्मुख ॥ ७३

स्कन्दः—

शिव एव परं ब्रह्म शिव एव परेश्वरः ।
शिवात् परतरं नास्ति शिवादन्यन्न किञ्चन ॥ ७४
तस्यैव परमा शक्तिः पार्वती लोकनायिका ।
स्कन्दविघ्नेश्वरौ तस्य तनयौ पार्श्वगौ मदा ॥ ७५
मुमुक्षूणां ज्ञानदाता सेनानीस्तु षडाननः ।
मुक्तानां चाधिपतिर्गणेशो विघ्ननायकः ॥ ७६
केशाः सृष्ट्यादिकर्तारो गुणदेवाः शिवात्मजाः ।
ब्रह्मणश्च वरो विष्णुर्विष्णोरपि हरो वरः ॥ ७७
रुद्रादपि महासेनस्तस्माद्गणपतिर्वरः ।
गणेशाच्च परा शक्तिः शक्तेरपि शिवो वरः ॥ ७८
शिवपुत्रो गणेशानः शंकरस्य वरेण ह ।
पूजनीयः शिशवात् पूर्वं सिद्धिहेतोर्बभूव ह ॥ ७९
वेदागमेषु विख्यातः शैवसिद्धान्त ईदृशः ।

सूतः—

एवं श्रुत्वा महासेनाच्छिवतत्त्वसमन्वितम् ॥ ८०
श्रीदक्षिणकुटीद्वीपक्षेत्रमाहात्म्यमुत्तमम् ।
सनत्कुमारो योगीन्द्रो वसिष्ठाश्रममुत्तमम् ॥ ८१
गत्वा स्नात्वा च तीर्थेषु पशुतीर्थादिषु क्रमात् ।
भक्त्या पशुपतीशानं शक्तिं वै मङ्गलेश्वरीम् ॥ ८२
पुपूजे गणपादींश्च ततोऽगात् स्वस्थलं मुनिः ।
श्रीदक्षिणकुटीद्वीपमाहात्म्यं भुक्तिमुक्तिदम् ॥ ८३
संग्रहेण मया प्रोक्तं व्यासवक्त्राद्यथा श्रुतम् ।
अग्निहोत्रं सदा यस्तु सेवते भक्तिमान्नरः ॥ ८४
तत्फलं हि पुराणस्य श्रवणादस्य जायते ।
आजन्ममरणान्नित्यं शृणुयादिदमादरात् ॥ ८५

शाम्भवो भक्तिमान् मर्त्यश्चक्रवर्ती भवेत्तु सः ।
इदं पुराणमतुलं शृणुयाद्भक्तिमान्नरः ॥ ८६
धर्ममर्थं च कामं च मोक्षमप्याप्नुयाद्ध्रुवम् ।
जन्ममध्ये सकृन्मर्त्यः स्वयभूतेश्वरं शिवम् ॥ ८७
सेवते भक्तिपूर्वं स कैलासं प्राप्नुयाद्ध्रुवम् ।

॥ इति श्रीस्कान्दे महापुराणे सनत्कुमारसंहितायां सह्यजाखण्डे श्रीदक्षिणकुटीद्वीपक्षेत्रमाहात्म्ये आदिशैवादिपञ्चविधशैवलक्षणवर्णनं नाम चत्वारिंशोऽध्यायः ॥

॥ श्रीदक्षिणकुटीद्वीपक्षेत्रमाहात्म्यं नाम पुराणरत्नं संपूर्णम् ॥

॥ ओं तत्सत् ॥

॥ श्रीस्वयम्भूतेशाय परमात्मने नमः ॥

## प्रथमोऽनुबन्धः

श्रीदक्षिणकुटीद्वीपक्षेत्रमाहात्म्येऽलर्कात्रिसंवादेऽष्टाविंशेऽध्याये प्रतिपादितविंशत्यधिकशतसंख्याकपञ्चाक्षरमन्त्रभेदनिरूपणम् । तथा परमेश्वरशरीरावयवनिरूपणं च यथाक्रमम् ॥

## नकार(नादि)चतुर्विंशतिः

| | | | पञ्चाक्षरमनुः | | | | | परमेश्वरशरीरावयवः |
|---|---|---|---|---|---|---|---|---|
| १ | I | (१) | न | मश् | शि | वा | य | शिरःपूर्वभागः |
| २ | ,, | (२) | न | मश् | शि | य | वा | शिरोमध्यमभागः |
| ३ | ,, | (३) | न | मो | वा | शि | य | शिरःपृष्ठभागः |
| ४ | ,, | (४) | न | मो | वा | य | शि | फालदक्षिणभागः |
| ५ | ,, | (५) | न | मो | य | शि | वा | फालमध्यमभागः |
| ६ | ,, | (६) | न | मो | य | वा | शि | फालवामभागः |
| ७ | II | (१) | न | शि | मो | वा | य | दक्षिणो भ्रूभागः |
| ८ | ,, | (२) | न | शि | मो | य | वा | वामो भ्रूभागः |
| ९ | ,, | (३) | न | शि | वा | मो | य | दक्षिणं नयनम् |
| १० | ,, | (४) | न | शि | वा | य | मः | वामं नयनम् |
| ११ | ,, | (५) | न | शि | य | मो | वा | फालस्थं नयनम् |
| १२ | ,, | (६) | न | शि | य | वा | मः | दक्षिणाक्षिनिमिस्थलम् |
| १३ | III | (१) | न | वा | मश् | शि | य | वामाक्षिनिमिस्थलम् |
| १४ | ,, | (२) | न | वा | मो | य | शि | फालाक्षिनिमिस्थलम् |
| १५ | ,, | (३) | न | वा | शि | मो | य | घ्राणमूलम् |
| १६ | ,, | (४) | न | वा | शि | य | मः | घ्राणम् |
| १७ | ,, | (५) | न | वा | य | मश् | शि | नासिकादक्षिणद्वारम् |
| १८ | ,, | (६) | न | वा | य | शि | मः | नासिकावामद्वारम् |
| १९ | IV | (१) | न | य | मश् | शि | वा | दक्षिणश्रुतिमूलम् |
| २० | ,, | (२) | न | य | मो | वा | शि | वामश्रुतिमूलम् |
| २१ | ,, | (३) | न | य | शि | मो | वा | दक्षिणश्रुतिगोलकः |
| २२ | ,, | (४) | न | य | शि | वा | मः | वामश्रुतिगोलकः |
| २३ | ,, | (५) | न | य | वा | मश् | शि | जिह्वामूलम् |
| २४ | ,, | (६) | न | य | वा | शि | मः | जिह्वामध्यम् |

## मकार(मादि)चतुर्विंशतिः

| | | | पञ्चाक्षरमनुः | | | | | परमेश्वरशरीरावयवः |
|---|---|---|---|---|---|---|---|---|
| २५ | I | (१) | मो | न | शि | वा | य | जिह्वाग्रम् |
| २६ | ,, | (२) | मो | न | शि | य | वा | ऊर्ध्वोष्ठः |
| २७ | ,, | (३) | मो | न | वा | शि | य | अधरोष्ठः |
| २८ | ,, | (४) | मो | न | वा | य | शि | ऊर्ध्वगता दन्तपङ्क्तिः |
| २९ | ,, | (५) | मो | न | य | शि | वा | अधोगता दन्तपङ्क्तिः |
| ३० | ,, | (६) | मो | न | य | वा | शि | तालुमूलम् |
| ३१ | II | (१) | मश् | शि | न | वा | य | दक्षिणहनुः |
| ३२ | ,, | (२) | मश् | शि | न | य | वा | वामहनुः |
| ३३ | ,, | (३) | मश् | शि | वा | न | य | कण्ठपूर्वभागः |
| ३४ | ,, | (४) | मश् | शि | वा | य | न | कण्ठपृष्ठभागः |
| ३५ | ,, | (५) | मश् | शि | य | न | वा | गलदक्षिणभागः |
| ३६ | ,, | (६) | मश | शि | य | वा | न | गलवामभागः |
| ३७ | III | (१) | मो | वा | न | शि | य | दक्षिणस्कन्धः |
| ३८ | ,, | (२) | मो | वा | न | य | शि | वामस्कन्धः |
| ३९ | ,, | (३) | मो | वा | शि | न | य | दक्षिणबाहुमूलम् |
| ४० | ,, | (४) | मो | वा | शि | य | न | वामबाहुमूलम् |
| ४१ | ,, | (५) | मो | वा | य | न | शि | दक्षिणहस्तः |
| ४२ | ,, | (६) | मो | वा | य | शि | न | वामहस्तः |
| ४३ | IV | (१) | मो | य | न | शि | वा | दक्षिणबाहुमध्यम् |
| ४४ | ,, | (२) | मो | य | न | वा | शि | वामबाहुमध्यम् |
| ४५ | ,, | (३) | मो | य | शि | न | वा | दक्षिणहस्तमध्यम् |
| ४६ | ,, | (४) | मो | य | शि | वा | न | वामहस्तमध्यम् |
| ४७ | ,, | (५) | मो | य | वा | न | शि | दक्षिणमणिबन्धः |
| ४८ | ,, | (६) | मो | य | वा | शि | न | वाममणिबन्धः |

## शिकार(श्यादि)चतुर्विंशतिः

| | | | पञ्चाक्षरमनुः | | | | | परमेश्वरशरीरावयवः |
|---|---|---|---|---|---|---|---|---|
| ४९ | I | (१) | शि | न | मो | वा | य | दक्षिणकूर्परः |
| ५० | ,, | (२) | शि | न | मो | य | वा | वामकूर्परः |
| ५१ | ,, | (३) | शि | न | वा | मो | य | दक्षिणकरतलम् |
| ५२ | ,, | (४) | शि | न | वा | य | मः | वामकरतलम् |
| ५३ | ,, | (५) | शि | न | य | मो | वा | दक्षिणाङ्गुष्ठः |
| ५४ | ,, | (६) | शि | न | य | वा | मः | वामाङ्गुष्ठः |
| ५५ | II | (१) | शि | मो | न | वा | य | दक्षिणतर्जनी |
| ५६ | ,, | (२) | शि | मो | न | य | वा | वामतर्जनी |
| ५७ | ,, | (३) | शि | मो | वा | न | य | दक्षिणमध्यमाङ्गुलिः |
| ५८ | ,, | (४) | शि | मो | वा | य | न | वाममध्यमाङ्गुलिः |
| ५९ | ,, | (५) | शि | मो | य | न | वा | दक्षिणानामिका |
| ६० | ,, | (६) | शि | मो | य | वा | न | वामानामिका |
| ६१ | III | (१) | शि | वा | न | मो | य | दक्षिणकानिष्ठिका |
| ६२ | ,, | (२) | शि | वा | न | य | मः | वामकनिष्ठिका |
| ६३ | ,, | (३) | शि | वा | मो | न | य | दक्षिणकरपृष्ठः |
| ६४ | ,, | (४) | शि | वा | मो | य | न | वामकरपृष्ठः |
| ६५ | ,, | (५) | शि | ता | य | न | मः | वक्षोमध्यम् |
| ६६ | ,, | (६) | शि | वा | य | मो | न | वक्षस ऊर्ध्वभागः |
| ६७ | IV | (१) | शि | य | न | मो | वा | दक्षिणस्तनम् |
| ६८ | ,, | (२) | शि | य | न | वा | मः | वामस्तनम् |
| ६९ | ,, | (३) | शि | य | मो | न | वा | स्तनमध्यम् |
| ७० | ,, | (४) | शि | य | मो | वा | न | दक्षिणतुन्दम् |
| ७१ | ,, | (५) | शि | य | वा | न | मः | वामतुन्दम् |
| ७२ | ,, | (६) | शि | य | वा | मो | न | नाभिः |

## वाकार(वादि)चतुर्विंशतिः

| | | | पञ्चाक्षरमनुः | | | | | परमेश्वरशरीरावयवः |
|---|---|---|---|---|---|---|---|---|
| ७३ | I | (१) | वा | न | मश् | शि | य | बस्तिः |
| ७४ | ,, | (२) | वा | न | मो | य | शि | कटिदेशः |
| ७५ | ,, | (३) | वा | न | शि | मो | य | कटिपृष्ठम् |
| ७६ | ,, | (४) | वा | न | शि | य | मः | पृष्ठोर्ध्वभागः |
| ७७ | ,, | (५) | वा | न | य | मश् | शि | पृष्ठमध्यम् |
| ७८ | ,, | (६) | वा | न | य | शि | मः | दक्षिणपार्श्वम् |
| ७९ | II | (१) | वा | मो | न | शि | य | वामपार्श्वम् |
| ८० | ,, | (२) | वा | मो | न | य | शि | वीणादण्डः |
| ८१ | ,, | (३) | वा | मश् | शि | न | य | गुदस्थानम् |
| ८२ | ,, | (४) | वा | मश् | शि | य | न | लिङ्गस्थानम् |
| ८३ | ,, | (५) | वा | मो | य | न | शि | मुष्कदक्षिणबीजम् |
| ८४ | ,, | (६) | वा | मो | य | शि | न | मुष्कवामबीजम् |
| ८५ | III | (१) | वा | शि | न | मो | य | दक्षिणोरुमूलम् |
| ८६ | ,, | (२) | वा | शि | न | य | मः | दक्षिणोरुमध्यम् |
| ८७ | ,, | (३) | वा | शि | मो | न | य | दक्षिणोरुपृष्ठम् |
| ८८ | ,, | (४) | वा | शि | मो | य | न | दक्षिणजानुः |
| ८९ | ,, | (५) | वा | शि | य | न | मः | दक्षिणजङ्घा |
| ९० | ,, | (६) | वा | शि | य | मो | न | दक्षिणपार्ष्णिः |
| ९१ | IV | (१) | वा | य | न | मश् | शि | दक्षिणगुल्फः |
| ९२ | ,, | (२) | वा | य | न | शि | मः | दक्षिणप्रपदम् |
| ९३ | ,, | (३) | वा | य | मो | न | शि | दक्षिणपादः |
| ९४ | ,, | (४) | वा | य | मश् | शि | न | वामोरुमूलम् |
| ९५ | ,, | (५) | वा | य | शि | न | मः | वामोरुमध्यम् |
| ९६ | ,, | (६) | वा | य | शि | मो | न | वामोरुपृष्ठम् |

## यकार(यादि)चतुर्विंशतिः

| | | | पञ्चाक्षरमनुः | | | | | परमेश्वरशरीरावयवः |
|---|---|---|---|---|---|---|---|---|
| ९७ | I | (१) | य | न | मश् | शि | वा | वामजानुः |
| ९८ | ,, | (२) | य | न | मो | वा | शि | वामजङ्घा |
| ९९ | ,, | (३) | य | न | शि | मो | वा | वामपार्ष्णिः |
| १०० | ,, | (४) | य | न | शि | वा | मः | वामगुल्फः |
| १०१ | ,, | (५) | य | न | वा | मश् | शि | वामप्रपदम् |
| १०२ | ,, | (६) | य | न | वा | शि | मः | वामपादः |
| १०३ | II | (१) | य | मो | न | शि | वा | दक्षिणपादाङ्गुष्ठः |
| १०४ | ,, | (२) | य | मो | न | वा | शि | दक्षिणपादद्वितीयाङ्गुलिः |
| १०५ | ,, | (३) | य | मश् | शि | न | वा | दक्षिणपादतृतीयाङ्गुलिः |
| १०६ | ,, | (४) | य | मश् | शि | वा | न | दक्षिणपादतुरीयाङ्गुलिः |
| १०७ | ,, | (५) | य | मो | वा | न | शि | दक्षिणपादकनिष्ठिका |
| १०८ | ,, | (६) | य | मो | वा | शि | न | वामपादाङ्गुष्ठः |
| १०९ | III | (१) | य | शि | न | मो | वा | वामपादद्वितीयाङ्गुलिः |
| ११० | ,, | (२) | य | शि | न | वा | मः | वामपादतृतीयाङ्गुलिः |
| १११ | ,, | (३) | य | शि | मो | न | वा | वामपादतुरीयाङ्गुलिः |
| ११२ | ,, | (४) | य | शि | मो | वा | न | वामपादकनिष्ठिका |
| ११३ | ,, | (५) | य | शि | वा | न | मः | दक्षिणपादमूलम् |
| ११४ | ,, | (६) | य | शि | वा | मो | न | वामपादमूलम् |
| ११५ | IV | (१) | य | वा | न | मश् | शि | महादेवप्राणाः |
| ११६ | ,, | (२) | य | वा | न | शि | मः | काटवस्त्रम् |
| ११७ | ,, | (३) | य | वा | मो | न | शि | कण्ठभूषणम् |
| ११८ | ,, | (४) | य | वा | मश् | शि | न | यज्ञोपवीतकम् |
| ११९ | ,, | (५) | य | वा | शि | न | मः | आसनपीठम् |
| १२० | ,, | (६) | य | वा | शि | मो | न | परश्वादिकमायुधम् |

# द्वितीयोऽनुबन्धः

श्रीदक्षिणकुटीद्वीपक्षेत्रमाहात्म्ये अलर्कात्रिसंवादे त्रिंशेऽध्याये प्रतिपादित-चतुर्विंशतिसंख्याकपञ्चाक्षरमन्त्रयन्त्रभेदनिरूपणम् । तत्र—

प्रथमो यन्त्रः

१. देवजातिवश्यप्रयोगः
२. 'ह्रीं क्लीं' बीजाक्षरसाहित्येनोच्चारणीयम्
३. यन्त्रस्वरूपं षट्कोणमध्यगतं त्रिकोणम्

| | | | | |
|---|---|---|---|---|
| | मश् | शि | वा | |
| मश् | शि | वा | | |
| शि | वा | य | न | मः |
| वा | य | न | मश् | शि |
| य | न | मश् | शि | वा |

*N B.* पूर्वपश्चिमप्रथमपङ्क्तेः उत्तरदक्षिणप्रथमपङ्क्तेश्च सरूपमन्त्रकत्व स्यात् । एवं तत्तद्द्वितीयपङ्क्तयोः, तृतीयपङ्क्तयोः, तुरीयपङ्क्तयोः, पञ्चम पङ्क्तयोश्च सारूप्य द्रष्टव्यम् । अत एव प्रतियन्त्र दशमन्त्राणामन्तर्भावेऽपि पञ्च मन्त्रा एवान्तर्भूता इति विवेक्तव्यम् । पूर्वपश्चिमपङ्क्तिगताना पञ्चानामुत्तर-दक्षिणपङ्क्तिगतैः पञ्चभिस्सारूप्येण भेदाभावात् । एवं वायव्यादाग्नेयान्तं पठने प्रतियन्त्रमक्षराणां पञ्चानामप्येकरूपता स्यादित्यपि द्रष्टव्यम् ॥

द्वितीयो यन्त्रः

१. मानुषजातिवश्यप्रयोगः
२. 'ह्रीं क्लीं' बीजाक्षरसाहित्येनोच्चारणीयम्
३. यन्त्रस्वरूपं षट्कोणमध्यगतं त्रिकोणम्

| | | | | |
|---|---|---|---|---|
| न | मश् | शि | य | वा |
| मश् | शि | य | वा | न |
| शि | य | वा | न | मः |
| य | वा | न | मश् | शि |
| वा | न | मश् | शि | य |

तृतीयो यन्त्रः

१. तिर्यग्जातिवश्यप्रयोगः
२. 'ह्रीं क्लीं' बीजाक्षरसाहित्येनोच्चारणीयम्
३. यन्त्रस्वरूपं षट्कोणमध्यगतं त्रिकोणम्

| | | | | |
|---|---|---|---|---|
| न | मो | वा | शि | य |
| मो | वा | शि | य | न |
| वा | शि | य | न | मः |
| शि | य | न | मो | वा |
| य | न | मो | वा | शि |

### चतुर्थो यन्त्रः

१. देवजातिमोहनप्रयोगः
२. 'क्लीं श्रीं' बीजाक्षरसाहित्येनोच्चारणीयम्
३. यन्त्रस्वरूपं त्रिकोणम्

| | | | | |
|---|---|---|---|---|
| न | मो | वा | य | शि |
| मो | वा | य | शि | न |
| वा | य | शि | न | मः |
| य | शि | न | मो | वा |
| शि | न | मो | वा | य |

### पञ्चमो यन्त्रः

१. मानुषजातिमोहनप्रयोगः
२. 'क्लीं श्री' बीजाक्षरसाहित्येनोच्चारणीयम्
३. यन्त्रस्वरूपं त्रिकोणम्

| | | | | |
|---|---|---|---|---|
| न | मो | य | शि | वा |
| मो | य | शि | वा | न |
| य | शि | वा | न | मः |
| शि | वा | न | मो | य |
| वा | न | मो | य | शि |

षष्ठो यन्त्रः

१. तिर्यग्जातिमोहनप्रयोगः
२. 'क्लीं श्रीं' बीजाक्षरसाहित्येनोच्चारणीयम्
३. यन्त्रस्वरूपं त्रिकोणम्

| | | | | |
|---|---|---|---|---|
| न | मो | य | वा | शि |
| मो | य | वा | शि | न |
| य | वा | शि | न | मः |
| वा | शि | न | मो | य |
| शि | न | मो | य | वा |

सप्तमो यन्त्रः

१. देवजातिस्तम्भनप्रयोगः
२. 'ग्लौं टं' बीजाक्षरसाहित्येनोच्चारणीयम्
३. यन्त्रस्वरूपं भूकोणम्

| | | | | |
|---|---|---|---|---|
| न | शि | मो | वा | य |
| शि | मो | वा | य | न |
| मो | वा | य | न | शि |
| वा | य | न | शि | मः |
| य | न | शि | मो | वा |

अष्टमो यन्त्रः

१. मानुषजातिस्तम्भनप्रयोगः
२. 'ग्लौं टं' बीजाक्षरसाहित्येनोच्चारणीयम्
३. यन्त्रस्वरूपं भूकोणम्

| | | | | |
|---|---|---|---|---|
| न | शि | मो | य | वा |
| शि | मो | य | वा | न |
| मो | य | वा | न | शि |
| य | वा | न | शि | मः |
| वा | न | शि | मो | य |

नवमा यन्त्रः

१. तिर्यग्जातिस्तम्भनप्रयोगः
२. 'ग्लौं टं' बीजाक्षरसाहित्येनोच्चारणीयम्
३. यन्त्रस्वरूपं भूकोणम्

| | | | | |
|---|---|---|---|---|
| न | शि | वा | मो | य |
| शि | वा | मो | य | न |
| वा | मो | य | न | शि |
| मो | य | न | शि | वा |
| य | न | शि | वा | मः |

### दशमो यन्त्रः

१. देवजात्याकर्षणप्रयोगः
२. 'आं वं' बीजाक्षरसाहित्येनोच्चारणीयम्
३. यन्त्रस्वरूपमष्टपत्रं षट्कोणम्

| | | | | |
|---|---|---|---|---|
| न | शि | वा | य | मः |
| शि | वा | य | मो | न |
| वा | य | मो | न | शि |
| य | मो | न | शि | वा |
| मो | न | शि | वा | य |

### एकादशो यन्त्रः

१. मानुषजात्याकर्षणप्रयोगः
२. 'आं वं' बीजाक्षरसाहित्येनोच्चारणीयम्
३. यन्त्रस्वरूपमष्टपत्रं षट्कोणम्

| | | | | |
|---|---|---|---|---|
| न | शि | य | मो | वा |
| शि | य | मो | वा | न |
| य | मो | वा | न | शि |
| मो | वा | न | शि | य |
| वा | न | शि | य | मः |

### द्वादशो यन्त्रः

१. तिर्यग्जात्याकर्षणप्रयोगः
२. 'आं वं' बीजाक्षरसाहित्येनोच्चारणीयम्
३. यन्त्रस्वरूपमष्टपत्रं षट्कोणम्

| | | | | |
|---|---|---|---|---|
| न | शि | य | वा | मः |
| शि | य | वा | मो | न |
| य | वा | मो | न | शि |
| वा | मो | न | शि | य |
| मो | न | शि | य | वा |

### त्रयोदशो यन्त्रः

१. देवजातिविद्वेषण (पीडन) प्रयोगः
२. 'हुंफट्स्वाहा हं' बीजाक्षरसाहित्येनोच्चारणीयम्
३. यन्त्रस्वरूपं राशिचक्रम्

| | | | | |
|---|---|---|---|---|
| न | वा | मश् | शि | य |
| वा | मश् | शि | य | न |
| मश् | शि | य | न | वा |
| शि | य | न | वा | मः |
| य | न | वा | मश् | शि |

चतुर्दशो यन्त्रः

१. मानुषजातिविद्वेषण (पीडन) प्रयोगः
२. 'हुंफट्स्वाहा हं' बीजाक्षरसाहित्येनोच्चारणीयम्
३. यन्त्रस्वरूपं राशिचक्रम्

| | | | | |
|---|---|---|---|---|
| न | वा | मो | य | शि |
| वा | मो | य | शि | न |
| मो | य | शि | न | वा |
| य | शि | न | वा | मः |
| शि | न | वा | मो | य |

पञ्चदशो यन्त्रः

१. तिर्यग्जातिविद्वेषण (पीडन) प्रयोगः
२. 'हुंफट्स्वाहा हं' बीजाक्षरसाहित्येनोच्चारणीयम्
३. यन्त्रस्वरूपं राशिचक्रम्

| | | | | |
|---|---|---|---|---|
| न | वा | शि | मो | य |
| वा | शि | मो | य | न |
| शि | मो | य | न | वा |
| मो | य | न | वा | शि |
| य | न | वा | शि | मः |

षोडशो यन्त्रः

१. देवजात्युच्चाटनप्रयोगः
२. 'यं क्रों' बीजाक्षरसाहित्येनोच्चारणीयम्
३. यन्त्रस्वरूपं वायुकोणम्

| | | | | |
|---|---|---|---|---|
| न | वा | शि | य | मः |
| वा | शि | य | मो | न |
| शि | य | मो | न | वा |
| य | मो | न | वा | शि |
| मो | न | वा | शि | य |

सप्तदशो यन्त्रः

१. मानुषजात्युच्चाटनप्रयोगः
२. 'यं क्रों' बीजाक्षरसाहित्येनोच्चारणीयम्
३. यन्त्रस्वरूपं वायुकोणम्

| | | | | |
|---|---|---|---|---|
| न | वा | य | मश् | शि |
| वा | य | मश् | शि | न |
| य | मश् | शि | न | वा |
| मश् | शि | न | वा | य |
| शि | न | वा | य | मः |

## अष्टादशा यन्त्रः

१. तिर्यग्जात्युच्चाटनप्रयोगः
२. 'यं क्रों' बीजाक्षरसाहित्येनोच्चारणीयम्
३. यन्त्रस्वरूपं वायुकोणम्

| | | | | |
|---|---|---|---|---|
| न | वा | य | शि | मः |
| वा | य | शि | मो | न |
| य | शि | मो | न | वा |
| शि | मो | न | वा | य |
| मो | न | वा | य | शि |

## एकोनविंशो यन्त्रः

१. देवजातिमारणप्रयोगः
२. 'हुंफट्स्वाहा हं' बीजाक्षरसाहित्येनोच्चारणीयम्
३. यन्त्रस्वरूपं त्रिकोणकम्

| | | | | |
|---|---|---|---|---|
| न | य, | मश् | शि | वा |
| य | मश् | शि | वा | न |
| मश | शि | वा | न | य |
| शि | वा | न | य | मः |
| वा | न | य | मश् | शि |

विंशो यन्त्रः

१. मानुषजातिमारणप्रयोगः
२. 'हुंफट्स्वाहा हं' बीजाक्षरसाहित्येनोच्चारणीयम्
३. यन्त्रस्वरूपं त्रिकोणकम्

| | | | | |
|---|---|---|---|---|
| न | य | मो | वा | शि |
| य | मो | वा | शि | न |
| मो | वा | शि | न | य |
| वा | शि | न | य | मः |
| शि | न | य | मो | वा |

एकविंशो यन्त्रः

१. तिर्यग्जातिमारणप्रयोगः
२. 'हुंफट्स्वाहा हं' बीजाक्षरसाहित्येनोच्चारणीयम्
३. यन्त्रस्वरूपं त्रिकोणकम्

| | | | | |
|---|---|---|---|---|
| न | य | शि | मो | वा |
| य | शि | मो | वा | न |
| शि | मो | वा | न | य |
| मो | वा | न | य | शि |
| वा | न | य | शि | मः |

## द्वाविंशो यन्त्रः

१. देवजातिभेदनप्रयोगः
२. 'हुं हं खं' बीजाक्षरसाहित्येनोच्चारणीयम्
३. यन्त्रस्वरूपं वृत्तम्

| | | | | |
|---|---|---|---|---|
| न | य | शि | वा | मः |
| य | शि | वा | मो | न |
| शि | वा | मो | न | य |
| वा | मो | न | य | शि |
| मो | न | य | शि | वा |

## त्रयोविंशो यन्त्रः

१. मानुषजातिभेदनप्रयोगः
२. 'हुं हं खं' बीजाक्षरसाहित्येनोच्चारणीयम्
३. यन्त्रस्वरूपं वृत्तम्

| | | | | |
|---|---|---|---|---|
| न | य | वा | मश् | शि |
| य | वा | मश | शि | न |
| वा | मश् | शि | न | य |
| मश् | शि | न | य | वा |
| शि | | | वा | |

## चतुर्विंशो यन्त्रः

१. तिर्यग्जातिभेदनप्रयोगः
२. 'हुं हं खं' बीजाक्षरसाहित्येनोच्चारणीयम्
३. यन्त्रस्वरूपं वृत्तम

| | | | | |
|---|---|---|---|---|
| न | य | वा | शि | मः |
| य | वा | शि | मो | न |
| वा | शि | मो | न | य |
| शि | मो | न | य | वा |
| मो | न | य | वा | शि |

## ॥ परमेश्वरस्य मूर्तिभेदाः षड्विंशतिः ॥

### श्रीदक्षिणकुटीद्वीपक्षेत्रमाहात्म्ये एकोनत्रिंशदध्यायात् समुद्धृतः परमेश्वरस्य षड्विंशतिमूर्तिभेदनामानुवादो नाम

### तृतीयोऽनुबन्धः

| | पु. | अ. | श्लो. |
|---|---|---|---|
| १. लिङ्गोद्भवमूर्तिः | ११७ | २९ | ३ |
| २. त्रिमूर्तकयुतः | ,, | ,, | ४ |
| ३. कल्याणसुन्दरमूर्तिः | ,, | ,, | ५ |
| ४. उमाम्बासंयुतमूर्तिः (उमासहायमूर्तिः) | ,, | ,, | ६ |
| ५. सुखासीनमूर्तिः | ,, | ,, | ७ |
| ६. गङ्गाधरमूर्तिः | ११८ | ,, | ८ |
| ७. नटेशमूर्तिः | ,, | ,, | ९ |
| ८. चण्डेशानवरप्रदमूर्तिः (भक्तपालनमूर्तिः) | ,, | ,, | १० |
| ९. वृषभवाहनमूर्तिः | ,, | ,, | ११ |
| १०. श्रीनीलकण्ठमूर्तिः | ,, | ,, | १२ |
| ११. हरिहरमूर्तिः | ,, | ,, | १३ |
| १२. एकपादमूर्तिः | ,, | ,, | १४ |
| १३. अर्धनारीश्वरमूर्तिः | ,, | ,, | १५ |
| १४. श्रीदक्षिणामूर्तिः (गुरुमूर्तिः) | ११९ | ,, | १६ |
| १५. सोमाविनायकमूर्तिः | ,, | ,, | १७ |
| १६. सोमास्कन्दमूर्तिः | ,, | ,, | १८ |
| १७. चन्द्रमौलीश्वरमूर्तिः | ,, | ,, | १९ |
| १८. वीरभद्रमूर्तिः | ,, | ,, | २० |

## ॥ मूर्तिभेदेन फलभेदप्रदर्शनपरश्चतुर्थोऽनुबन्धः ॥

### श्रीदक्षिणकुटीद्वीपक्षेत्रमाहात्म्ये त्रिंशेऽध्याये एकसप्ततितमश्लोकोपक्रम-त्र्यशीतितमश्लोकावसानभागात् समुद्धृतः

| | | |
|---|---|---|
| १. | लिङ्गोद्भवमूर्तिः | मोक्षप्रदायिनी |
| २. | त्रिमूर्तैकयुता मूर्तिः | वंशवृद्धिप्रदायिनी |
| ३. | कल्याणसुन्दरमूर्तिः | सर्वदा मङ्गलप्रदायिनी |
| ४. | उमासहायमूर्तिः | भार्यासौख्यप्रदायिनी |
| ५. | सुखासीनमूर्तिः | धर्मार्थकाममोक्षप्रदायिनी |
| ६. | गङ्गाधरमूर्तिः | सर्वपापप्रणाशिनी |
| ७. | नटेशमूर्तिः | सम्पद्योगप्रदायिनी |
| ८. | चण्डेशानवरप्रदमूर्तिः | महापातकनाशिनी |
| ९. | वृषभवाहनमूर्तिः | धर्मसिद्धिप्रदायिनी |
| १०. | श्रीनीलकण्ठमूर्तिः | विषदोषप्रणाशिनी |
| ११. | हरिहरमूर्तिः | धर्मार्थदायिनी |
| १२. | एकपादमूर्तिः | महारोगविनाशिनी |
| १३. | अर्धनारीश्वरमूर्तिः | सर्वसौख्यप्रदायिनी |
| १४. | श्रीदक्षिणामूर्तिः | मेधाप्रज्ञाप्रदायिनी |
| १५. | सोमाविनायकमूर्तिः | सर्वसिद्धिप्रदायिनी |
| १६. | सोमास्कन्दमूर्तिः | पुत्रसौख्यप्रदायिनी |
| १७. | चन्द्रमौलीश्वरमूर्तिः | धनधान्यप्रदायिनी |
| १८. | वीरभद्रमूर्तिः | शत्रुविद्वेषनाशिनी |
| १९. | कालसंहारमूर्तिः | सर्वारिष्टविनाशिनी |
| २०. | कामान्तकमूर्तिः | योगविघ्नविनाशिनी |
| २१. | गजान्तकमूर्तिः | पराभिचारशमनी |
| २२. | त्रिपुरसंहारमूर्तिः | जन्मजरामृत्युविनाशिनी |
| २३. | भिक्षाटनमूर्तिः | योषिद्वृन्दविमोहिनी |
| २४. | जालन्धरसंहारमूर्तिः | दुष्टविनाशिनी |
| २५. | शरभमूर्तिः | अरिप्रणाशिनी |
| २६. | भैरवमूर्तिः | रक्षाकरी |

## ॥ पञ्चमोऽनुबन्धः ॥

### श्रीदक्षिणकुटीद्वीपक्षेत्रनामान्तराणि

| | | पु. | अ. | श्लो. |
|---|---|---|---|---|
| १. | वसिष्ठाश्रमः | २१ | ५ | ४६ |
| | | २१ | ५ | ५३ |
| | | ४८ | १२ | ४३ |
| | | ८६ | २१ | ४७ |
| २. | धेनुकापुरम् | ५४ | १४ | २४,२६ |
| ३. | रथपुरम् | ८४ | २१ | १९ |
| | | ८६ | २१ | ४७ |
| ४. | पलाशवनम् (कृते वसिष्ठकृतं नाम) | १६४ | ३९ | ४३,४८ |
| ५. | मालतीवनम् (कलौ मङ्गलाकृतं नाम) | ,, | ,, | ४४,४९ |
| ६. | बिल्ववनम् (द्वापरे शेषकृतं नाम) | ,, | ,, | ४५,४९ |
| ७. | शम्याकवनम् (त्रेतायां भैरवकृतं नाम) | ,, | ,, | ४६,४९ |

# ॥ षष्ठोऽनुबन्धः ॥

## श्रीदक्षिणकुटीद्वीपक्षेत्रेशनामान्तराणि

| | | पु. | अ. | श्लो. |
|---|---|---|---|---|
| १. | स्वयम्भूतेश्वरः | ५ | १ | १३ |
| | | ८६ | २१ | ४८ |
| २. | वसिष्ठेश्वरः | २१ | ५ | ४७ |
| | | २१ | ५ | ५२ |
| | | ४८ | १२ | ४१,४४ |
| | | ८६ | २१ | ४८ |
| ३. | धेनुपुरीशः | ५४ | १४ | २५,२७ |
| ४. | पशुपतीश्वरः | ६९ | १७ | ३५,३८ |
| | | ७० | १७ | ४७ |
| | | ८६ | २१ | ४९ |
| ५. | अनन्तेशः | ८३ | २० | २८ |
| | | ८६ | २१ | ४८ |
| ६. | नागेशः | ८३ | २० | २९ |
| ७. | रथपुरेश्वरः | ८४ | २१ | १० |
| | | ८६ | २१ | ४८ |

## ॥ सप्तमोऽनुबन्धः ॥

### श्रीदक्षिणकुटीद्वीपक्षेत्रपराशक्तिनामानि

| | | पु. | अ. | श्लो. |
|---|---|---|---|---|
| १. | लोकनायिका | ५ | १ | १४ |
| २. | सुगन्धिकुन्तलेश्वरी | १३३ | ३२ | २५ to २९ |
| ३. | मङ्गलेश्वरी | १४९ | ३५ | ४३ |

## ॥ अष्टमोऽनुबन्धः ॥

### ॥ स्वयम्भूतेश्वरसमाराधनेन वरानाप्तवतां नामानि ॥

१. मातृशापग्रस्तस्य यमस्य तच्छापविमोचनपुरस्सरं दक्षिणाशाधिपत्य-पुण्यपापानुसारिजीवकर्मफलप्रदातृत्वादिवरप्रदानम्
पु० १५ अ० ४ श्लो० १५ to २८

२. पित्रा भानुना नियोजितस्य घोरं तपः कृतवतः शनैश्चरस्य ग्रहाधिपत्य-मन्दगतिमत्त्व-शमीवृक्षाश्वत्थतरुवास-कर्मानुसारिशुभाशुभफल-प्रदातृत्वादिवरप्रदानम् पु० १९ अ० ५ श्लो० २६ to ३०

३. नासत्ययोः पित्रा भानुना नियोजितयोः रूपगुणान्वितत्व-देवभिषग्भाव—स्वर्गमण्डलवास—श्रीदक्षिणकुटीद्वीपक्षेत्रवासिजनरोगशान्ति-करण-देवसंघमान्यत्वादिवरप्रदानम् पु० २० अ० ५ श्लो० ३१ to ३३

४. वसिष्ठस्य मनुप्रभृतिभिः सह तपः कृतवतो ब्रह्मविद्वरिष्ठत्व-इलाकन्यापुंस्त्व-वसिष्ठाश्रमवसिष्ठेश्वरनामविख्यात्यादिवरप्रदानम्
पु० २१ अ० ५ श्लो ४८ to ५३

५. श्रीदक्षिणकुटीद्वीपक्षेत्रे स्वयंभूतेश्वरस्य सन्निधौ रुद्रपाशुपत-मखमनुष्ठितवतो हेरण्डमुनिशिष्यस्य जयचोलधरापतेः नवमे मन्वन्तरे शताश्वमेधफलेन्द्रपदप्राप्त्यादिवरप्रदानम्
पु० ४७ अ० १२ श्लो० २८ to ३१

६. दत्तात्रेयस्य शासनात् द्वादशाब्दं घोरं तपः कृतवतः कार्त-वीर्यार्जुनस्य वसिष्ठेशप्रसादात् सहस्रबाहुता-नागलक्षबल-सप्तद्वीपगमन-योग्यरथ-स्वेच्छारूपधारणसामर्थ्य-सर्वदायुद्धविजय-देवद्विजधर्मभक्त्यादि-वरप्राप्तिः पु० ४९ अ० १३ श्लो० १४ to १७

७. पित्रा मार्तण्डेन चोदिते नन्दिनीकमलिन्यौ सौरभेय्यौ वर्षसहस्रं स्वयम्भूतेशं समाराध्य मातृसमानरूप सृष्टिसंहारशक्ति-दिव्यान्नभोजनसामर्थ्य-यथेच्छंसर्वलोकगमनसामर्थ्य—दुष्टदानवाद्यजेयत्व—धेनुपुरधेनुपुरीशनामविख्यात्यादिवरान् प्रापतुः
पु० ५३ अ० १४ श्लो० १४ to २६

८. वसिष्ठो वसिष्ठेशं समाराध्य शताब्दं दारुणं तपोऽनुष्ठायाग्निहोत्रादिकर्मणामनुष्ठानसौकर्याय स्वर्गस्थां सौरभेयीं नन्दिनीं स्वयम्भूतेशप्रासादात् संप्राप पु० ५५ अ० १४ श्लो० ३१ to ३८

९. पित्रा ऋचीकेनानुशिष्टो जमदग्निमहर्षिः पशुपतीशं समाराध्य दिव्यवर्षशतान्ते आविर्भूतात् स्वयंभूतेशात् कमलिनीवश्यत्व-अभीप्सितप्रदातृत्वादिवरानलब्ध पु० ५६ अ० १४ श्लो० ४५ to ५०

१०. मात्रा रेणुकया समाज्ञप्तस्य द्वादशाब्दं पशुपतीश्वरं संपूज्य तपः कृतवतो भार्गवस्य स्वयंभूतेश्वरदृढभक्ति-सर्वशत्रुनिबर्हणपरश्वादिप्राप्तिः पु० ७५ अ० १८ श्लो० ६९ to ७३

११. दिव्यवर्षसहस्रं नारदोपदिष्टशिवाष्टाक्षरमन्त्रजपपूर्वकं ज्योतिर्महालिङ्गं समाराध्य तपः कृतवतो नागराजस्य भूधारणसामर्थ्य-सहस्रफणमण्डितत्व-निरन्तरदर्शन-अचलस्थानादिदुर्लभवरप्राप्तिः
पु० ८२ अ० २० श्लो० १६ to २९

१२. शुक्राचार्येण समुपदिष्टपञ्चाक्षरमहामन्त्रो राहुसुतः सुमाली दानवेन्द्रः पशुतीर्थे स्नात्वा श्रीदाक्षिणकुटीद्वीपे दिव्यं वर्षसहस्रं तपस्यन् प्रसादिताज्ज्योतिर्महालिङ्गात् सूर्यरथतुल्यं व्योमगं स्वचित्तानुसारेण गतिसंयुतमनुत्तमं रथं प्रापत् पु० ८४ अ० २१ श्लो० १३ to २१

१३. शिवभक्तवधाद्भीतस्य मार्तण्डस्य रथपुरे महत्तपोऽनुष्ठाय गोलरूपरथस्थिति-कालचक्रनियामकता-भानुमण्डलस्थिति-कर्माधारभाव-ग्रहाधिपत्य मेरुप्रदक्षिणीकरण-विश्वप्रकाशनसामर्थ्यादिवरप्राप्तिः
पु० ८६ अ० २१ श्लो० ४१ to ४६

१४. पञ्चसहस्रवर्षात्ययेऽपि मधुकैटभौ जेतुमशक्तस्य महाविष्णोः, चक्रतीर्थं निर्माय तत्र स्नात्वा, ज्योतिर्महालिङ्गं सम्पूज्य, तपः कृतवतः, "बालविनायकप्रसादान्मधुकैटभवधः" इत्युपायावगमः
पु० ९० अ० २२ श्लो० ३८ to ४८

१५. शक्तिपञ्चाक्षरमन्त्रेण द्वादशाब्दं श्रीदाक्षिणकुटीद्वीपे ज्योतिर्महालिङ्गं तोषितवतो वत्सतनयस्यालर्कराजस्य सप्तद्वीपाधिपत्य-धर्मदान-श्रद्धा-दातृत्वनिबन्धनकीर्ति-स्वशरीरसायुज्यप्राप्ति-अक्षय्यसम्पदादिवरप्राप्तिः
पु० १२९ अ० ३१ श्लो० १९ to ४९

१६. शिवदूषणेन रुद्रच्छिन्नपञ्चमवक्त्रकः, सृष्टिशक्तिविरहितः जीवतुल्यामवस्थां प्राप्तो विधिः, महाविष्ण्वादेशेन श्रीदक्षिणकुटीद्वीपं गत्वा, पशुतीर्थे स्नात्वा; पञ्चाक्षरमहामनुं जपन्, निराहारो वर्षशत तपस्यन्; अन्ते प्रादुर्भूतेन प्रसन्नेन स्वयम्भूतज्योतिर्महालिङ्गेन विघ्नेशतोषणार्थमेकाक्षरमहामनुमुपदिश्य समनुगृहीतः

पु० १४१ अ० ३३ श्लो० ३१ to ४३

१७. विटङ्केशख्यातियुतसोमास्कन्दमूर्तिप्रसादाद्विष्णुचोलस्य कुष्ठरोगशमन–मारसदृशरूपप्राप्ति–दिग्विजयसाधनपरशुलाभ–वर्षसहस्रपर्यन्त–सार्वभौमश्रीभोग-शिवसारूप्यादिवरगणावाप्तिः

पु० १४५ अ० ३४ श्लो० २१ to ३७

१८. शिवशापात् सर्पभावमापन्नस्य स्कन्दस्य वर्षमात्रं श्रीदक्षिणकुटीद्वीपे तपः कृतवतः स्वयम्भूतेशप्रसादात् पूर्वरूपावाप्तिः

पु० १५४ अ० ३६ श्लो० ४९ to ५७

१९. स्कन्दशिष्यजैगीषव्योपदेशात् श्रीदक्षिणकुटीद्वीपे मासमेक निरन्तरं तपः कृतवतः, ततः पूर्वं चण्डीश्वरजप्येशादिक्षेत्रेषु तपः कृतवतश्च ब्रह्मपञ्चमशिरश्छेदाद् ब्रह्महत्याग्रस्तस्य भैरवस्य पशुपतीश्वरप्रसादान्महापातकविनिर्मोकः, क्षेत्रतीर्थपालकभावसम्प्राप्तिश्च

पु० १५५ अ० ३७ श्लो० १ to १९

२०. सुराङ्गनानां श्रीदक्षिणकुटीद्वीपे विविधं तपः कृतवतीनां नमकरूपया स्तुत्या सन्तुष्टः पशुपतीशः सावित्रीशापाज्जलभावमापन्नान् देवान् निजं रूपमंशेन नदीभाव च प्रापयत्

पु० १६० अ० ३८ श्लो० ४० to ५२

२१. पार्वतीशापाल्लतावृक्षभावमापन्नानां मस्त्रीकाणां देवानां श्रीदक्षिणकुटीद्वीपे तपः परममनुष्ठितवता ज्योतिर्महालिङ्गप्रसादान्निजरूपावाप्तिः, स्वांशेन वृक्षभावश्च

पु० १६३. अ० ३९ श्लो० २५ to ३७

## ॥ नवमोऽनुबन्धः ॥

### ॥ लोकनायिकायाः सकाशाद्वरानाप्तवतां नामानि ॥

| | पु० | अ० | श्लो० |
|---|---|---|---|
| १. शङ्खपालस्य मृतमदालसापुत्रीप्राप्तिः | १०८ | २७ | ३ to ८ |
| २. सुगन्धिकन्यकापतिसञ्जीवनं दम्पत्योरयुताब्दवयस्कता च | १३६ | ३२ | ६३ to ७६ |
| ३. मङ्गलाख्यवैश्यकन्यकावैधव्यनिवृत्तिः, लक्षवर्षभोगानन्तरं मणिद्वीपगमनं च | १४९ | ३५ | ३८ to ५५ |

[परां शक्तिमुपासितवत्याः, "कश्चिद्राजपुत्रो वराहकेतुं हत्वा ते भर्ता भविना वर्षान्ते" इत्यनुशिष्टायाः स्वप्ने, मदालसायाः देवीप्रसादाद्वत्सराजपतिभावप्राप्तिः पु० ९८ अ० २४ श्लो० ४० to ५२]

# ॥ दशमोऽनुबन्धः ॥

## ॥ विनायकप्रसादाद्वरानाप्तवतां नामानि ॥

१. पुष्टिविनायकसमाराधनेन तत्प्रसादात् देवेन्द्रः कावेरीं कुम्भजघटाद्बहिरानयत् पु० ३६ अ० १० श्लो० ३०

२. सुधागणेशप्रसादात् विष्णुपुरोगाणां देवानाममृतलाभः पु० ४३ अ० ११ श्लो० २५

३. सुधागणेशनित्यपूजामहिम्ना देवेन्द्रस्य पाकादिदानवपीडानिवृत्तिः पु० ४४ अ० ११ श्लो० ३२

४. बालविनायकं श्रीमत्पञ्चदशाक्षरीमहाविद्यया प्रसाद्य तत्प्रसादान्मोहितयोर्मधुकैटभदानवेन्द्रयोर्महाविष्णुकृतो वधः पु० ५४ अ० २३ श्लो० ३४ to ५४

५. श्रीदक्षिणकुटीद्वीपे सिन्दूरगणपतिमेकाक्षरेण शिवोपदिष्टेन मनुना सन्तोष्य निर्विघ्नसृष्टिशक्तिं सत्यसंकल्पतां चावाप्नोत् पितामह. पु० १४० अ० ३३ श्लो० ४३ to ४९

## ॥ एकादशोऽनुबन्धः ॥

### ॥ श्रीदक्षिणकुटीद्वीपक्षेत्रमाहात्म्यान्तर्गताः स्तुतयः ॥

## ॥ द्वादशोऽनुबन्धः ॥

### ॥ श्रीदक्षिणकुटीद्वीपक्षेत्रमाहात्म्यान्तर्गताः सयन्त्रोद्धारा मन्त्रभेदाः ॥

१. सूर्योपदिष्टः परमेश्वरस्य एकाक्षरो महामन्त्रः शिवयमोभय-देवताकः यमेन जप्तः पु० १४ अ० ४ श्लो० २-३
„ १६ „ ४ „ २७

ऋषिच्छन्दोदेवताबीजन्यासध्यानश्लोकादिनिरूपणम् पु० १७ अ० ४ श्लो० ३५ to ४०

२. कवेरचोलभूपालेन जप्तः कुम्भसंभवोपदिष्टो नवाक्षरमहा-मन्त्रः पद्मजदेवताकः पु० २६ अ० ७ श्लो० ३

ऋषिच्छन्दोन्यासादिनिरूपणम् „ २६ „ ७ „ ४
मूलमन्त्रस्वरूपकथनम् „ २६ „ ७ „ ५
ध्यानश्लोककथनम् „ २६ „ ७ „ ६
यन्त्रोद्धारप्रकारः „ २६ „ ७ „ ७

३. लोपामुद्रासुजप्ता हादिविद्या पञ्चदशी पु० २९ अ० ७ श्लो० ३८

४. देवेन्द्रेण सुजप्तो नारदोपदिष्टः पुष्टिविनायकस्य षोडशार्ण-महामन्त्रः पु० ३३ अ० ९ श्लो० १

ऋषिच्छन्दोदेवतान्यासादिनिरूपणम् „ ३३ „ ९ „ ५
मूलमन्त्रस्वरूपाभिधानम् „ ३४ „ ९ „ ६
ध्यानश्लोकवर्णनम् „ ३४ „ ९ „ ७
यन्त्रोद्धारः सविस्तरम् „ ३४ „ ९ „ ८

५. नामराजेन दिव्यवर्षसहस्रं सुजप्तो नारदेनोपदिष्टो ज्योति-र्महालिङ्गस्य अष्टाक्षरमहामन्त्रः पु० ७९ अ० १९ श्लो० ३४

ऋषिच्छन्दोदेवताबीजशक्तिकीलकन्यासनिरूपणम् पु० ७९ अ० १९ श्लो० ४१

ध्यानश्लोकनिरूपणम् „ ७९ „ १९ „ ४३
मूलमन्त्रस्वरूपम् „ ७९ „ १९ „ ४३
यन्त्रोद्धारः „ ७९ „ १९ „ ४४

## ॥ त्रयोदशोऽनुबन्धः ॥

### ॥ श्रीदक्षिणकुटीद्वीपक्षेत्रमाहात्म्यान्तर्गतानि सुभाषितानि ॥

१. भाविनोऽर्थस्य वै बलात् पु० १३ अ० ३ श्लो० ४६

२. मात्रा स्नेहेन सर्वेषु वर्तितव्यं सुतेषु वै
पु० १३ अ० ३ श्लो० ५०

३. अपत्यं दुरपत्य स्यान्नाम्बा कुजननी भवेत्
पु० १३ अ० ३ श्लो० ५३

४. मुनिरास्ते महाभागः शापानुग्रहकारकः ।
यस्य दर्शनतः पापकोटयो यान्ति संक्षयम् ॥
पु० ५७ अ० १५ श्लो० ११

५. अद्य मे पितरौ धन्यौ जन्म ज्ञानं तथा तपः ।
पुण्यवृक्षोऽद्य फलितो यज्जातं तव दर्शनम् ॥
अद्य मे सम्पदो धन्याः कुलं धन्यं यशोऽपि मे ।
परब्रह्मेति यत् प्रोक्तं तदेव त्वं न संशयः ॥
पु० ५८ अ० १५ श्लो० २० to २१

६. राज्ञां स्वकार्यैककर्तॄणां भवादृशनिरीक्षणात् ।
नान्यत् प्रयोजनमुरु श्रेयसाजनि तत् स्फुटम् ॥
पु० ५८ अ० १५ श्लो० २४

७. आसीत् त्वद्दर्शनाकाङ्क्षा जाता पुण्येन सत्फला ।
देह आत्मा तपो ज्ञानमाश्रमो मम साम्प्रतम् ॥
अभूदागमनाद्राजन् सार्थकाः सर्वसम्पदः ॥
पु० ५८ अ० १५ श्लो० २७ to २८

८. किमसाध्यं तपस्विनाम् पु० ५९ अ० १५ श्लो० ३३

९. नो चेत् सत्य लयं व्रजेत् । अकीर्तिश्च भवेल्लोके
पु० ५९ अ० १५ श्लो० ३९

१०. नेदृशी श्रीहरौ हरे ।
इन्द्रे दिक्पालके स्रष्टर्यपि ब्रह्माणि नेदृशी ॥
पु० ६१ अ० १५ श्लो० ५५ to ५६

११. अतिपुण्यवतो लोके साधुशब्दः प्रयुज्यते ।
महान् क्षुद्रस्य वाक्यं चेत् कुरुते सोऽपि साधुताम् ॥
प्राप्नोति सर्वलोकेषु कीर्तिं स्फीतां समुत्कटाम् ॥
पु० ६१ अ० १५ श्लो० ६७ to ६८

१२. अनृतं नोक्तपूर्वं मे परिहासेऽपि वा नृप ।
पु० ६२ अ० १५ श्लो० ७१

१३. कुमतिस्तस्य भवति यस्य दैवमदक्षिणम् ।
अनिष्टं बलवद्भाति दुष्टग्रहकृतं मुने ॥
पु० ६२ अ० १६ श्लो० १

१४. मुनीनां शान्तचित्तानां कन्दमूलफलाशिनाम् ।
मनसा सृष्टिसंहारकर्तॄणामस्पृहावताम् ॥
जितेन्द्रियाणां विज्ञानां नेक्षे धेन्वा प्रयोजनम् ।
पु० ६२ अ० १६ श्लो० ४ to ५

१५. वन्यमारुतभक्ष्याणां मोक्षसाधनकारिणाम् ।
वेदाभ्यसनशीलानां सम्पदा किं प्रयोजनम् ॥
पु० ६२ अ० १६ श्लो० ५ to ६

१६. शास्त्रपाठनशीलानां धर्मशास्त्रार्थवेदिनाम् ।
योगाभ्यासरतानां किं कामधेन्वा प्रयोजनम् ॥
पु० ६२ अ० १६ श्लो० ६ to ७

१७. कार्याय महते स्यात्तु महद्वस्तु महद्गतम् ।
अरण्यवासिने तुभ्यं महद्रत्नं न चोचितम् ॥
पु० ६३ अ० १६ श्लो० ७ to ८

१८. नो चेद्राज्ञां किमग्राह्यं लोकेषु बलशालिनाम् ।
पु० ६३ अ० १६ श्लो० १०

१९. कौटिल्यं तव न ज्ञातं बकस्येव हृदि स्थितम् ।
पु० ६३ अ० १६ श्लो० १३

२०. भ्रान्तोऽसि नृप सत्यं त्वमप्राप्यं योऽभिवाञ्छसि ।
पु० ६३ अ० १६ श्लो० १७

२१. किं करोमि द्विजोऽसि त्वमिति क्षान्तं वचः कटु ।
पु० ६३ अ० १६ श्लो० २०

२२. व्याकुले न प्रहर्तव्यम् पु० ६५ अ० १६ श्लो० ४९

२३. किं युद्धं लघुना सह पु० ६५ अ० १६ श्लो० ४९

२४. न स विप्रोऽभिमन्तव्यो यस्य स्यात् कपटं हृदि ।
पु० ६६ अ० १६ श्लो० ५१

२५. यद्गृहे भुक्तमत्यन्त तेन नेष्टा विरोधिता ।
यदि दुष्टेन साकारि दृष्टं तत् फलमन्तिकात् ॥
पु० ७३ अ० १८ श्लो० ४३ to ४४

२६. अशौचिनो न भोक्तव्यमन्नम पु० ७४ अ० १८ श्लो० ४९

२७. विजयस्ते भवेत् पुत्र शंकराराधनं कुरु ।
तुष्टे तस्मिन् महादेवे सर्वं सेत्स्यति वाञ्छितम् ॥
पु० ७५ अ० १८ ६४ to ६५

२८. किञ्चित् पुरातनं पुण्यमासीचेद्दर्शनं तव ।
अजन्यकस्मादग्रेऽपि सम्यङ्मे स्यान्न संशयः ॥
अन्यथाकृतपुण्यानां दर्शनं तु कथं भवेत् ॥
पु० ७८ अ० १९ श्लो० २८ to २९

२९. तस्मादनेन योद्धव्यं पुरुषेण बलीयसा ।
रणकण्डूतिशान्त्यर्थं विजयायेतराय वा ॥
रिपुमेनं हनिष्यावो गच्छावो वा पुनर्भवम् ।
पु० ८९ अ० २२ श्लो० २७ to २८

३०. न हि कामयते कश्चिन्मरणं स्वयमात्मनः ।
पु० ८९ अ० २२ श्लो० ३१

३१. मेघश्यामं मुखं तेऽद्य दर्शितं नौ कुतः पुनः ।
पु० ९४ अ० २३ श्लो० ४१

३२. सहसा दहते सर्वं लघुरेव हुताशनः ।
लघुर्दीपो महद्रात्रौ यथा संहरते तमः ॥
पु० ९४ अ० २३ श्लो० ४३

३३. तव हस्तान्मृतिः शुभा ।
अन्ते त्वच्चिन्तनात् सद्यो मुक्तिं यान्ति सनातनीम् ॥
पु० ९५ अ० २३ श्लो० ५१ to ५२

३४. सर्वं त्यजावो नो सत्यं सत्ये सर्वं प्रतिष्ठितम् ।
पु० ९५ अ० २३ श्लो० ५३

३५. पितुश्चापि प्रीतियुता माता पुत्रेषु विष्टपे ।
मातृप्रसादः सुलभः पुत्राणां च भवेद्ध्रुवम् ॥
पु० १०५ अ० २६ श्लो० २७ to २८

३६. असंस्कृता पितृगृहे कन्या या तु रजस्वला ।
सा कन्या वृषली ज्ञेया तत्पतिर्वृषलीपतिः ॥
पु० १३३ अ० ३२ श्लो० १८ to १९

३७. तापसीनां न दोषोऽस्ति वृषलीत्वं न विद्यते ।
भर्तृग्रहणपर्यन्तं तापसी कन्यकैव हि ॥
पु० १३३ अ० ३२ श्लो० २२

३८. विधिर्वै बलवानिति पु० १४७ अ० ३५ श्लो० १६

३९. किमसाध्यं हि भक्तानां सुप्रसन्ने सदाशिवे ।
पु० १५९ अ० ३८ श्लो० १८

४०. बिल्वपत्रं विना विभुः । न सन्तुष्येत्
पु० १५९ अ० ३८ श्लो० ६२

४१. तद्वाक्यमन्यथाकर्तुं न हि शक्तः पितामहः ।
पु० १६० अ० ३८ श्लो० ४२

४२. नान्यथा भाषितं मम पु० १६० अ० ३८ श्लो० ४३

४३. येनार्पितं बिल्वपत्रं भुवनं तेन चार्पितम् ।
सुवर्णशतभाराणां फलं प्राप्तं न संशयः ॥
पु० १६० अ० ३८ श्लो० ४४

४४. देहो देवालयः प्रोक्त आत्मा शम्भुरुदीरितः ।
पु० १६९ अ० ४० श्लो० ५०

४५. शिव एव परं ब्रह्म शिव एव परेश्वरः ।
शिवात् परतर नास्ति शिवादन्यन्न किञ्चन ॥
पु० १७१ अ० ४० श्लो० ७४

४६. मुमुक्षूणां ज्ञानदाता सेनानीस्तु षडाननः ।
मुक्तानां चैवाधिपतिर्गणेशो विघ्ननायकः ॥
पु० १७१ अ० ४० श्लो० ७६

## ॥ पञ्चदशोऽनुबन्धः ॥

### ॥ श्रीदक्षिणकुटीद्वीपक्षेत्रमाहात्म्यस्य त्रयोदशाध्यायोपक्रमभागात् समुद्धृतश्चन्द्रवंशवृक्षः ॥

चन्द्रः
|
बुधः (इलायाम्)
|
पुरूरवाः
|
आयुः
|
नहुषः
|
ययातिः
|
यदुः
|
महस्रदः
|
हैहयः
|
धर्मनेत्रः
|
कार्तः
|
माहजः
|
महिष्मान्
|
भद्रश्रेणः
|
दुर्दमः
|
कनकः
|
कृतवीर्यः
|
कार्तवीर्यार्जुनः
|
प्रतर्दनः (वंश्यः) (*See* ९६—२४—२)
|
वत्सराजः (*See* ९८—२४—३०)
|
(मदालसायामुत्पन्नः) अलर्कः (*See* १११—२७—४३)
(श्रीदक्षिणकुटीद्वीपे सोमास्कन्दमूर्तिप्रतिष्ठापकः *See* १३३–३४–९ & १०)

## ॥ चतुर्दशोऽनुबन्धः ॥

### श्रीदक्षिणकुटीद्वीपक्षेत्रमाहात्म्यस्य तृतीयाध्यायप्रभृत्येकादशाध्यायावसानभागादुद्धृतः सूर्यवंशवृक्षः




1. पत्न्याविमे न तु दुहितरौ
2. अनेनैव श्रीदक्षिणकुटीद्वीपक्षेत्रे श्रीस्वयम्भूतेश्वरशिवालयः शिल्पिभिः कारितः॥ (*See* पृ० 43 अ० 11 श्लो० 18)
   शक्तिकान्तारे श्वेतविघ्नेशनगर रथतुल्यसुधागणपतिदेवालयश्च कारितौ (*See* 43—11—15 & 46—12—10)

△ एतन्मध्यगं श्रीदक्षिणकुटीद्वीपक्षेत्रम्

3. श्रीदक्षिणकुटीद्वीपे सोमास्कन्दमूर्त्याराधनेन कुष्ठरोगादिनिर्मुक्तः (*See* 142—34—2)

# ॥ षोडशोऽनुबन्धः ॥

## ॥ मुख्यानि स्वायम्भुवानि क्षेत्राणि ॥

( 11-तमे पृष्ठे 18 *to* 22 श्लोकान् पश्यत )

१. कैलासः
२. केदारः
३. वैद्यनाथः
४. काशी
५. महाकालः
६. सोमनाथः
७. त्र्यम्बकः
८. मध्यमेशः
९. श्रीशैलः
१०. गोकर्णः
११. रैवतः
१२. काञ्ची
१३. कालहस्ती
१४. वटारण्यम्
१५. चिदम्बरम्
१६. गृध्रशैलः
१७. वृद्धागिरिः
१८. अरुणाद्रिः
१९. श्वेतारण्यम्
२०. मध्यार्जुनम्
२१. कपर्दीशक्षेत्रम
२२. श्रीदक्षिणकुटीद्वीपम
२३. जप्येशक्षेत्रम्
२४. मधुरापुरम्
२५. शालिवाटीश्वरक्षेत्रम
२६. श्रीकण्ठक्षेत्रम
२७. शुचीश्वरम
२८. कमलालयः

## ॥ सप्तदशोऽनुबन्धः ॥

### ॥ अष्टौ रुद्रमूर्तिप्रभेदाः ॥

(156-तमे पृष्ठे 17 to 27 श्लोकान् पश्यत)

| | | पु० | अ० | श्लो० |
|---|---|---|---|---|
| १. | कालाग्निरुद्रः | १५६ | ३८ | १९ |
| २. | ईशानरुद्रः | ,, | ,, | २० |
| ३. | स्थाणुरुद्रः | ,, | ,, | २१ |
| ४. | शरभरुद्रः | ,, | ,, | २६ उत्तरार्धम् |
| ५. | वीरभद्ररुद्रः | ,, | ,, | २६ पूर्वार्धम् |
| ६. | कूश्माण्डरुद्रः | ,, | ,, | २५ |
| ७. | हाटकेश्वररुद्रः | ,, | ,, | २४ |
| ८. | कश्यपसुतरुद्रः | ,, | ,, | २२ |

# ॥ अष्टादशोऽनुबन्धः ॥

## ॥ वटुकाद्या अष्टौ भैरवमूर्तिस्थितिभेदाः ॥

(157-तमे पृष्ठे 31 to 38 श्लोकान् पश्यत)

| | | |
|---|---|---|
| १. | वटुकभैरवः | शक्तिक्षेत्रनिवासी |
| २. | क्षेत्रपालभैरवः | भैरवस्थलनिवासी |
| ३. | कालभैरवः | शैवक्षेत्रनिवासी |
| ४. | आकाशभैरवः | ,, |
| ५. | स्वर्णाकर्षणभैरवः | ,, |
| ६. | मार्तण्डभैरवः | भास्करक्षेत्रनिवासी |
| ७. | नग्नभैरवः | गाणपत्यक्षेत्रनिवासी |
| ८. | कङ्कालभैरवः | शैवक्षेत्रनिवासी |

PRINTED AT THE MADRAS LAW JOURNAL PRESS, MYLAPORE, MADRAS.